गुरु र्ज्येष्ठो गुरुः सुरपुरोहितः। दुर्भरोऽपि गुरुः प्रोक्तो गुरुः शिष्याभिषेचकः, अने.

गुल. गुलः सप्रादैचवे पुमान्। गुली तु गुटिकारोगभिदोः स्त्रियां गुला स्मृता, मे.

गुल्म. गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः। स्तम्बे स्त्रियामामलक्यां लावनीवस्त्रवेश्मसु, मे. गुल्मः रुक्स्तम्बे क्लीबे घट्टसैन्ययोः सैन्यरक्षणे। गुल्मी सप्राद्यामलक्यां लावनिकावस्त्रवेश्मसु, वि. गुल्मः सैन्योपरक्षणे। रुक्सैन्यघट्टभेदेषु स्तम्भे गुल्मी पटौकसि। आमलक्यां लयो र्वन्याम्, हे. गुल्मा रुक्स्तम्बसेनासु, अ. गुल्मः स्तम्बे घट्टभेदे, त्रि.

गुह. गुहः षाण्मातुरे गुहा। सिंहपुच्छ्यां च गर्त्ते च पर्वतादेश्च गह्वरे, मे. गुहः स्कन्दे गुहा पुनः। गह्वरे सिंहपुच्छ्यां च, हे. गुहा तु गह्वरे सिंहपुच्छ्यां स्कन्दे गुहो मतः, वि.

गुह्य. गुह्यं रहस्युपस्थे च गुह्यः कमठदम्भयोः, मे, वि. गुह्यः कमठदम्भयोः। गुह्यमुपस्थे रहसेऽत्र, हे. रहस्योपस्थयो र्गुह्यम्, अ.

गूढ. गूढं रहसि गुह्ये च न द्वयोः संवृते त्रिषु, मे. गूढं रहःसंवृतयोः, हे. गूढं रहसि गुह्ये च संवृते पुनरन्यवत्, वि.

गृञ्जन. गृञ्जनम्। विषदग्धपशो र्मांसे क्लीबं पुंसि रसोनके, मे. गृञ्जनस्तु रसोनके। विषदिग्धपशो र्मांसे गृञ्जनं च प्रकीर्त्तितम्, वि. गृञ्जनं विषदग्धस्य पशो र्मांसे रसोनके, हे. विषदिग्धपशो र्मांसे गृञ्जनं ना रसोनके, त्रि.

गृध्र. गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽर्थलुब्धके, मे. गृध्रः खगान्तरे प्रोक्तः वाच्यवच्चार्थलुब्धके, वि. गृध्रो गृध्नौ खगान्तरे, हे. गृध्रः स्याल्लोभिपक्षिणोः, त्रि.

गृष्टि. अथ गृष्टिः सकृत्सूतगवीबदरयोः स्त्रियाम्, मे. गृष्टिस्तु सकृत्सूतगवी भवेत्। वराहकान्ता च, हे. गृष्टिः धेन्वोषधीभिदोः, त्रि.

गृह. गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि, मे. गृहाः पत्न्यां

गृहे स्मृता, वि. गृहा दारेषु सद्मनि, हे. दारेषु च गृहाः, श.

गृहपति. भवेद् गृहपतिः पुंसि गृहस्थेऽपि च मन्त्रिणि, मे. गृहपति र्गृहस्थे स्याद् आत्याधाने च मन्त्रिणि, वि. गृहपति र्गृही मन्त्री, हे. गृही मन्त्री गृहपतिः, त्रि.

गृह्य. गृह्यं गुदे ग्रन्थिभेदे क्लीबं शाखापुरे स्त्रियाम्। गृहासक्तमृगादौ ना त्रिषु चास्वैरिपक्षयोः, मे. गृह्यं पुरीषमार्गेऽपि भवेदस्वैरपक्षयोः। गृह्या च शाखानगरे गृह्यस्त्वेकेऽपुत्रदीरितः, वि. गृह्यन्तु मलवर्त्मनि। गृह्योऽस्वैरिणि पक्षे च गृहासक्तमृगाण्डजे। गृह्या तु शाखानगरे, हे. गृह्यमस्वैरिपक्षयोः, त्रि.

गृह्यक. गृह्यको निभृते च्छेके, मे. गृह्यकश्छेकनिभृतयोः, वि, त्रि.

गेय. गेयः स्याद् गातव्ये गायने त्रिषु, मे. गेयो गातवेत्र गायनेऽपि च, वि. गेयौ गातव्यगायनौ, हे. गातव्यगायनौ गेयौ, त्रि.

गेष्णु. गेष्णुर्ना गायने नटे, मे. गेष्णुर्नटे गायके च, हे. गेष्णुर्नटे गायने च, वि.

गैरिक. गैरिकं धातुरुक्मयोः, मे. गैरिकं कनके धातौ, त्रि. अथ गैरिकम्। स्वर्णे धातौ, हे. स्वर्णेऽपि गैरिकम्, श.

गो. गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयीदृग्वाणदिग्वाग्भूष्वप्सु भूम्नि च, मे. गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः। अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौ र्मता, वि. गौरुदके दृशि। स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौ गिरि, हे. स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः, अ. स्वर्गे वज्रे च रश्मौ च बलीवर्दे च गौः पुमान्। स्त्री वाणरोहिणीदृग्दिग्वाग्भूमिष्वप्सु, भूम्नि च, त्रि. दिग्दृष्टिदीधितिस्वर्गवज्रवाग्वाणवारिषु। भूमौ पशौ च गोशब्दो विद्वद्भि र्दशसु स्मृतः, ह. वाणे वाचि पशौ भूमौ दिशि रश्मौ जलेऽक्षिणि। स्वर्गे मातरि वज्रेऽग्नौ सुखे सत्ये च गोध्वनिः, अने.

गोकण्टक. गोकण्टको गोक्षुरके स्थपुटे च गवां खुरे, मे, वि. गोकण्टको गोक्षुरके गोखुरे स्थपुटीकृते, हे.

गोकर्ण. गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे। अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ, मे. गोकर्णोऽश्वतरे सर्पे सारङ्गे प्रमथान्तरे। अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ, वि. गोकर्णः प्रमथान्तरे। अङ्गुष्ठानामिकोन्माने मृगेऽश्वतरसर्पयोः। गोकर्णी तु मूर्विकायाम्, हे. अङ्गुष्ठानामिकोन्माने गोकर्णोऽहौ मृगेऽपि च, त्रि.

गोकिल. गोकिलो मुषले हले, हा. गोकिलः। मुषले लाङ्गले चापि, हे. गोकिलो मुसले हले, वि, मे.

गोकुणिक. स्त्राद् गोकुणिको बलिरे पङ्गुस्थगवुरपेक्षके, मे. गोकुणिकः केकरे स्त्रात् पङ्गुस्थगवुरपेक्षके, वि, हे.

गोग्रन्थि. गोग्रन्थि र्ना करीषे स्त्राद्गोष्ठे गोजिह्विकौषधौ, मे, वि.

गोजागरिक. गोजगरिकमित्याज्ञ मङ्गले कण्टकारके, वि. गोजागरिकं मङ्गले पुंसि स्त्रात् कण्टकारके, मे. स्त्राद् गोजागरिकं भच्यकारके मङ्गलेऽपि च, हे.

गोडुम्ब. गोडुम्बः शीर्णवृन्ते च गवादन्यान्तु योषिति, मे. गोडुम्बः शीर्णवृन्ते स्त्राद् गवादन्याः फलेऽपि च, वि.

गोण्ड. गोण्डः पामरजातौ च वृद्धनाभौ च तद्वति, मे. गोण्डः पामरजातौ च वृद्धनाभौ च वाच्यवत्, वि. गोण्डः स्त्राद् वृद्धनाभिके। पामरजातौ च, हे.

गोत्र. गोत्रा भूगव्ययो र्गोत्रः शैले गोत्रं कुलाख्ययोः। सम्भावनीयबोधे च काननक्षेत्रवर्त्मसु, मे. गोत्रं नाम्नि कुले क्षेत्रे कानने चित्तवर्त्मनोः। सम्भावनीयबोधेऽपि गोत्रः क्षोणीधरे मतः। गोसमूहभुवोर्गोत्रा, वि. गोत्रं नाम्नि कुले पुंसि शैले भूगव्ययोः स्त्रियाम्, त्रि. गोत्रं नामान्वयो गोत्रो गोत्रश्च धरणीधरः। गोत्रा वसुन्धरा ज्ञेया गोत्रञ्च प्रवरं स्मृतम्, अने. गोत्रं क्षेत्रेऽन्वये छत्रे सम्भाव्यबोधवर्त्मनोः। वने नाम्नि च

गोत्रोऽद्रौ गोत्रा भुवि गवाङ्गणे, हे. गोत्रन्तु नाम्नि च, श. गोत्रं नाम्नि तथान्वये, रु.

गोदन्त. गोदन्तो हरिताले स्याद् दंशिते हरितेऽपि च, वि. गोदन्तो हरिताले स्यात् सन्नद्धे दंशितेऽपि च, हे. गोदन्तो हरितालेऽपि, रु.

गोधा. गोधा तलनिहाकयोः, मे. गोधा तले निहाकायाम्, वि. गोधा प्राणिविशेषे स्यात् ज्याघातस्य च वारणे, हे. गोधा तले निहाकायाम्, त्रि.

गोधूम. गोधूमो नागरङ्गे स्यादोषधिव्रीहिभेदयोः, मे. गोधूमो नागरङ्गे स्याद् भेषजव्रीहिभेदयोः, वि. गोधूमो भेषजे नागरङ्गव्रीहिप्रभेदयोः, हे.

गोनर्द. गोनर्दमपि कैवर्तीमुस्तके पुंसि सारसे, मे.

गोप. गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि। ग्रामस्याधिकृते पुंसि शारिवाख्यौषधौ स्त्रियाम्, मे. गोपो ग्रामौघगोष्ठाधिकृतयोर्वल्लवे नृपे। गोपी गोपालमहिलाशारिवारक्षिकासु च, वि. गोपो भूपालवल्लवौ। ग्रामौघगोष्ठाधिकृतौ गोपी गोपालसुन्दरी। शारिवा रक्षिका, हे. गोधुग्गोष्ठपती गोपौ, श्र.

गोपति. गोपतिः शिवषण्डयोः। नृपभास्करयोः पुंसि, मे. गोपतिः शङ्करे षण्डे पार्थिवेऽपि विकर्त्तने, वि. गोपतिः शङ्करे षण्डे नृपतौ त्रिदशाधिपे। सहस्रकिरणे चापि, हे. षण्डः सूर्यश्च गोपतिः, त्रि.

गोपाल. गोपालो नृपगोपेशे, मे. गोपालो गोपभूपयोः वि, हे. गोपो भूपश्च गोपालौ, त्रि.

गोपुर. गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च, मे. गोपुरन्तु पुरद्वारि द्वारमात्रे च मुस्तके, वि. गोपुरं पुनः। मुस्तके द्वारि पूर्द्वारे, हे. द्वारमात्रेऽपि गोपुरम्, श्र. पूर्द्वारि द्वारि गोपुरम्, त्रि.

गोप्य. गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत्, मे. गोप्यो

दासीसुते गोप्यो रक्षणीयेऽभिधेयवत्, वि. गोप्यौ दासेरगोप्तव्यौ, हे. गोप्यौ गोप्तव्यचेटकौ, त्रि.

गोमिन्. गोमी शृगाले पुंसि स्यात् त्रिषु गोमत्युपासके, मे. गोमी तूपासके फेरौ, वि. गोमी फेरौ गोमत्युपासके, हे.

गोमुख. गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने। पुंसि मातलिपुत्रे च महादेवगणान्तरे, मे. गोमुखं वाद्यभेदे स्यादालेपने कुटिलौकसि, हे. गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने, वि. गोमुखं लेपने वाद्यभाण्डे, त्रि. गोमुखमुपलेपने, ह.

गोमेदक. गोमेदकं पीतमणौ काकोले पत्रकेऽपि च, मे, वि. गोमेदकः पीतरत्ने काकोले पत्रकेऽपि च, हे. गोमेदकश्च काकोले, हा.

गोरक्ष. गोरक्षो नागरङ्गे स्याद् गवां च परिरक्षके, वि, मे. गोरक्षे गोपनारङ्गौ, हे.

गोरक्षजम्बू. गोरक्षजम्बू र्गोधूमे तथा गोरक्षतण्डुले, वि. गोरक्षजम्बू र्गोधूमे धान्ये गोरक्षतण्डुले, हे.

गोरङ्कु. गोरङ्कु र्नग्नबन्दिनोः। खगे च, हे. गोरङ्कुः पक्षिजातौ च भवेन्नग्नकबन्दिनोः, वि. खगे नग्ने च गोरङ्कुः, त्रि. गोरङ्कुः स्यात् पुमान् पक्षिभेदे नग्नकबन्दिनोः, मे.

गोलक. गोलको विधवापुत्रे जारात् स्यान्मणिके गुडे, मे. गोलको विधवापुत्रे जाराच्च मणिके गुडे, वि. गोलकस्तु जारतो विधवासुते। अलिञ्जरे गुडे पिण्डे, हे. गोलकौ मणिजारजौ, त्रि.

गोल. गोला गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम्। पत्राञ्जने मण्डले चालिञ्जरे बालखेलने, मे. गोला सखीवर्त्तुलयो र्गोलं लक्ष्यानुसारतः। पत्राञ्जने कुनव्यां च गोदावर्य्यां च मण्डले, वि. गोलः स्यात् सर्ववर्तुले। गोला पत्राञ्जने गोदावर्य्यां सख्यामलिञ्जरे। मण्डले च कुनव्यां च बालक्रीड़नकाष्ठके, हे. मण्डले मणिके गोलं गोला गोदावरी सखौ, त्रि.

ग्रस. ग्र

लुप्तवर्णपदोदिते,

ग्रह. ग्र

च सैंहिकेयोपरा

उपरागे पूतना

ग्रहाः, अ. ग्रहशब्द

ग्रहण. ग्र

त्वुपलब्धौ सप्राद

वि. ग्रहणं स्वी

हे. ग्रहणं स्वी

ग्रहराज.

वि. ग्रहराजः

ग्राम. ग्र

दिपूर्वकः, वि.

शब्दादिपूर्वो वृन्द

ऽपि ग्रामो भूत

ग्रामणी.

ग्रामणी भोगिक

ग्रामेयोपपण्त्रयो

गमणीः पण्त्रयो

पुंसि श्रेष्ठे ग्राम

ग्राममद्गु,

ग्राममद्गुरिका

हे. शृङ्गर्यां च ग्र

ग्रामीण.

ग्रामीन.

ो श्वेतदूर्वायां सप्राद्. वचाभूतकेशयोः, मे. गो-
स्यावारयापितोः, वि. गोलोमी वरयोषायां

हो वासुदेवे सप्राद्. गवाध्यक्षे वृहस्पतौ, मे,
वासुदेवे वृहस्पतौ, हे, गोष्ठाध्यक्षेऽपि गो-
गोरक्षत्रौ, अने.

ष्ठानके गोष्ठी सभासंलापयोः स्त्रियां, मे. गोष्ठं
भायां संलापे.वि. गोष्ठं गोस्थानके गोष्ठी संलापे

गोपदप्रमाणे गवाङ्घ्रि गतिगोचरे, मे. गोष्पदं
ाचरे, हे. गोष्पदं सेविते माने, अ.
सोषसोः, वि. गोसौ वोलोपसोः, मे. गोसो

हारभेदे ना द्राक्षायां गोस्तनी स्त्रियाम्, मे.
ाक्षायां गोस्तनीति च, वि. गोस्तनो हारभेदे
हे.

ना मुनौ बुद्धे रोचनीदुर्गयोः स्त्रियाम्, मे.
भेदेऽथ गोतमी। रोचन्यामम्बिकायां च, वि.
हर्षिभेदयोः। गौतमुत्रमायां रोचन्याम्, हे.
ो श्वेते विशुद्धे चाभिधेयवत्। ना श्वेतसर्षपे
ौरी त्वसञ्जातरजःकन्याशङ्करभार्ययोः। रोचनी-
। आपगाया विशेषेऽपि यादसां पति-
ो पीते विशुद्धे चन्द्रमस्यपि। विशदे गौरस्तु
ोयुमानग्निकोर्वीषु प्रियङ्गौ वरुणस्त्रियाम्।
ोऽरुणे सिते पीते, अ. नग्नकन्योमयो गौरी
गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत्।

गौरी तु विशदे पद्मकेसरे सितसर्षपे। गौरः शशिनि गौरी तु नग्नकन्योमयोः स्मृता। रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च। नदीभेदेऽपि गौरी स्यात् वरुणस्य च योषिति, वि. गौरी शिवप्रिया प्रोक्ता गौरी गोरोचना मता। गौरी स्यादप्रसूता स्त्री गौरी शुभ्राभयान्वया, अने.

गौरिल. गौरिलस्तु पुमान् लौहचूर्णे स्याद् गौरसर्षपे, मे. गौरिलो लोहचूर्णे स्याद् गौरिलो गौरसर्षपे, वि. स्याद् गौरिलस्तु सिद्धार्थे लौहचूर्णे, हे.

ग्रथित. ग्रथितो हतहृब्धयोः। आक्रान्ते च, हे. ग्रथितं गुम्फितात्रान्तहिंसितेषु समीरितम्, वि. ग्रथितं गुम्फिते क्रान्ते हिंसिते च त्रिलिङ्गकम्, मे.

ग्रन्थ. ग्रन्थो ग्रन्थनाधनयोः स्याच्छास्त्राचरसङ्ख्ययोः, मे. ग्रन्थो धने स्यात् सन्दर्भे द्वात्रिंशद्वर्णनिर्मितौ, वि. ग्रन्थो गुम्फे धने शास्त्रे द्वात्रिंशद्वर्णनिर्मितौ, हे. शास्त्रद्रविणयो ग्रन्थः, अ. ग्रन्थो द्वात्रिंशदक्षरी। धनञ्च ग्रन्थना चापि, त्रि. लिपिसङ्ख्यायां शास्त्रे द्रवेत्र च ग्रन्थशब्दमिच्छन्ति, ह.

ग्रन्थि. ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः, मे. ग्रन्थिः पर्वणि कौटिल्ये ग्रन्थिपर्णे गदान्तरे, वि. ग्रन्थिस्तु ग्रन्थिपर्णे स्याद् गाथारुग्भेदयोरपि, हे.

ग्रन्थिक. ग्रन्थिकं पिप्पलीमूले गुग्गुलुग्रन्थिपर्णयोः। करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे, मे. ग्रन्थिकं पिप्पलीमूले ग्रन्थिको गुग्गुलद्रुमे। माद्रेये च करीरे च दैवज्ञे च प्रकीर्तितम्, वि. ग्रन्थिकं पिप्पलीमूले ग्रन्थिपर्णकभेषजे। ग्रन्थिको गुग्गुलौ दैवज्ञे माद्रेयकरीरयोः, हे. ग्रन्थिकौ पार्थदैवज्ञौ ग्रन्थिपर्णं च न द्वयोः, त्रि.

ग्रन्थिल. ग्रन्थिलस्तु करीरद्रौ विकङ्कततरौ पुमान्। सग्रन्थौ त्रिषु, मे. ग्रन्थिलो ग्रन्थिसहिते करीरद्रौ विकङ्कते, वि. ग्रन्थिलो ग्रन्थिसहिते विकङ्कतकरीरयोः, हे.

ग्रस्त. ग्रस्तं जग्धे लुप्तपदोदिते, हे. ग्रस्तं ग्रासीकृतेऽपि सत्रात् लुप्तवर्णपदोदिते, वि, मे. ग्रस्तं वागभेदभुक्तयोः, त्रि.

ग्रह. ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे। सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः, मे, वि. ग्रहो ग्रहणनिर्बन्धानुग्रहेषु रणोद्यमे। उपरागे पूतनादौ आदित्यादौ विधुन्तुदे, हे. निर्बन्धोपरागार्कादयो ग्रहाः, अ. ग्रहशब्दः सूर्यादिषु भूतादिष्वभिनिवेशे च, ह.

ग्रहण. ग्रहणं स्वीकारादरकरोपरागोपलब्धिवन्दिषु, मे. ग्रहणं तूपलब्धौ सत्रादादरे ग्रहणं करे। ग्रहोपरागस्वीकारवन्दिषु ग्रहणं मतम्, वि. ग्रहणं स्वीकृते वन्द्यां धीगुणे हस्त आदरे। ग्रहोपरागे प्रत्याये, हे. ग्रहणं स्वीकृतौ हस्ते, त्रि.

ग्रहराज. ग्रहराजो रवौ चन्द्रे, मे. ग्रहराजो रवौ चन्द्रेऽपि, वि. ग्रहराजः शशिन्यर्के, हे.

ग्राम. ग्रामः स्वरे संवसथे, मे. ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः, वि. ग्रामो वृन्दे शब्दादिपूर्वकः। षड्जादौ संवसथे च, हे. शब्दादिपूर्वो वृन्देऽपि ग्रामः, अ. ग्रामः संवसथे स्वरे, त्रि. सङ्घातेऽपि ग्रामो भूतेन्द्रियशब्दकरणानाम्, ह.

ग्रामणी. सत्राद्ग्रामणीः प्रधानेऽधिपतौ त्रिषु नापिते पुंसि, मे. ग्रामणी भोगिके पत्यौ प्रधाने नापितेऽपि च। ग्रामणी र्नीलिकायाञ्च ग्रामेयीपण्यत्रयोषितोः, वि. ग्रामणीः चुरमर्द्दिनि। प्रधाने भोगिके पत्यौ गमणीः पण्ययोषिति। ग्रामेयत्रां नीलिकायाञ्च, हे. ग्रामणी र्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु, अ.

ग्राममद्गुरिका. ग्राममद्गुरिका ग्रामयुद्धे स्टङ्गीभषे स्त्रियाम्, मे. ग्राममद्गुरिका स्टङ्ग्यां ग्रामयुद्धे च कीर्त्यते, वि. ग्राममद्गुरिका युद्धस्टङ्ग्योः, हे. स्टङ्ग्यां च ग्रामयुद्धे च ग्राममद्गुरिका स्त्रियाम्, त्रि.

ग्रामीण. गामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत्, मे.

ग्रामीन. ग्रामीनः शुनि काके पुंसि त्रिषु सम्भूते ग्रामे, मे. ग्रामीनो

ग्रामसम्भूते ग्रामीनः शुनि वायसे, वि.

ग्राम्य. ग्राम्यं स्त्रीकरणे क्लीवेऽश्लीलप्राकृतयोस्त्रिषु, मे. ग्राम्यो जनेऽन्यवद् ग्राम्यमश्लीलरतबन्धयोः, वि. ग्राम्यो ग्रामभवे जने। ग्राम्यं रतबन्धेऽश्लीले, हे.

ग्रावन्. ग्रावा तु प्रस्तरे पृथ्वीधरे पुंसि, मे. ग्रावा प्रस्तरे जलदे गिरौ, वि. ग्रावाऽश्मनि गिरौ, हे. ग्रावाणौ शैलपाषाणौ, अ. ग्रावा शैले, ह.

ग्राह. ग्राहो ग्रहेऽवहारे च, मे, वि. ग्राहो ग्रहे जलचरे, हे.

ग्राहक. ग्राहकौ घातिविहगे व्याधानाञ्च ग्रहीतरि, वि, मे. ग्राहको ग्रहीतरि स्याद् व्याधानां घातिपक्षिणि, हे.

ग्रीवा. स्यात् तु ग्रीवा कन्धरायां तच्छिरायाञ्च योषिति, मे. ग्रीवाऽपि कन्धरायां स्यात् तच्छिरायामपीष्यते, वि. ग्रीवे शिरोधितच्छिरे, हे.

ग्रीष्म. ग्रीष्म उष्मर्तुभेदयोः, मे.

ग्लौ. ग्लौ र्धरण्यां निशापतौ, मे.

घ. घो घण्टायां घर्घरे ना स्त्रियान्तु काञ्चिघातयोः, मे. खड्गी शिवोत्तमो मेधा दक्षिणाङ्गुलिमूलगः। घनो घनस्वरश्चैव घकारो ङादिमः स्मृतः, मा.

घट. घटः समाधिभेदेभशिरःकूटकुटेषु च। घटा घटनगोष्ठीभघटनासु च योषिति, मे. घटा घटने गजसंहतौ। गोष्ठ्यां घटस्त्विभशिरःकूटे समाधिकुम्भयोः, हे. घटः समाधिभेदेभशिरःकूटकुटेषु च। घटा घटनगोष्ठीभघटनासु च दृश्यते, वि. घटा गोष्ठ्याम्, ह.

घट्ट(ट)ना. घट्टना चलनावृत्त्योः, हे. घटना चलनावृत्त्योः, मे.

घन. घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोः। ना मुस्ताब्दौघदार्ढ्येषु विस्तारे लोहमुद्गरे। त्रिषु सान्द्रे दृढे च, मे. घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोः। घनः सान्द्रे दृढे दार्ढ्ये विस्तारे लोह-

मुद्गरे। मेघमुस्तकयोश्चापि, वि. घनः सान्द्रे दृढ़े दार्ढ्य विस्तारे मुद्ग-रेऽम्बुदे। सङ्घे मुस्ते घनं मध्यनृत्यवाद्यप्रकारयोः, हे. घनो मेघे मूर्तिगुणे त्रिषु मूर्त्ते निरन्तरे, अ. अयाम्बुदमुस्तयोः। घनः पुंसि घनं वाद्यम्, त्रि. घनो मेघो घनं सान्द्रं कांस्यतालादिकं घनम्। घनं सङ्घो घनं नित्यं घनः स्याल्लोहमुद्गरः, श्याने.

घनरस. भवेद्घनरसः सान्द्रे निर्यासे मोरटेऽम्बुनि। कर्पूरे पीलुपर्ण्यांश्च सस्यकस्थिरसेऽपि च, मे. भवेद्घनरसः सान्द्रे निर्यासे मोरटेऽप्सु च। कर्पूरे पीलुपर्ण्यां च समत्रकुसिद्धरसेऽपि च, वि. घनरसोऽप्सु कर्पूरे सान्द्रे सिद्धरसे द्रवे। मोरटे पीलुपर्ण्यां च, हे.

घनसार. घनसारस्तु कर्पूरे दक्षिणावर्त्तपारदे, मे, वि, हे.

घनाघन. घनाघनो वर्षुकाब्दे मत्तघातुककुञ्जरे। शक्रे च, मे. घनाघनो घातुकमत्तदन्तिनो निरन्तरे वासववर्षुकाब्दयोः, वि. घनाघनो निरन्तरे। वासवे घातुके मत्तगजे वर्षुकवारिदे, हे. घनाघनः शक्रवर्षुकाम्बुदयोः, रु. शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः, अ. शक्रेऽपि वर्षुके मेघे मत्तनागे घनाघनः, श्याने.

घर्घर. घर्घरो ना चलद्वारिध्वानोलूकनदान्तरे। स्त्री क्षुद्रघण्टां वीणाया भेदे स्वरान्तरेऽपि च, मे. घर्घरस्तु चलद्वारिध्वाने घूके नदान्तरे, वि. घर्घरस्तु नदान्तरे। चलद्वारिध्वनौ घूके, हे.

घर्घरिका. अथ घर्घरिका क्षुद्रघण्टावादित्रदण्डयोः मे. स्त्री सा घर्घरिका क्षुद्रघण्टिकाभृष्टधान्ययोः। वाद्यप्रभेदवादित्रदण्डयोरापगान्तरे, वि. घर्घरिका भृष्टधान्ये किङ्किण्यां सरिदन्तरे। वादित्रस्य च दण्डेऽपि, हे.

घर्म. घर्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि, वि. अथ घर्मो निदाघवत्। स्वेदाम्भस्यातपे ग्रीष्मोष्मणोः, हे. उष्णेऽपि घर्मः, श्र. घर्मः स्वेदातपोष्मसु, त्रि. घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्बुनोरपि, मे.

घस्र. घस्रस्तु दिवसे हिंस्रे, मे. घस्रो दिवसहिंस्रयोः, वि.

घस्त्रो वासरहिंस्रयोः, हे.

घात. घातः काण्डप्रहारयोः, मे, वि.

घृणा. घृणा जुगुप्साकृपयोः, मे, वि. घृणा तु सप्राज्ञ जुगुप्सायां करुणायाम्, हे. जुगुप्साकरुणे घृणे, श्र. दौर्मनस्यं घृणा प्रोक्ता घृणा च करुणा मता, अने. घृणा जुगुप्सायामपि, ह.

घृणि. घृणिः पुनः। अंशुज्वालातरङ्गेषु, हे.

घृत. घृतमाज्ये जले क्लीवं प्रदीप्ते त्वभिधेयवत्, मे. घृतमाज्याम्बु दीप्तेषु, हे. अम्बु च घृताख्यते, श्र. घृतमाज्ये प्रदीप्ते च सलिले च घृतं मतम्, वि.

घृष्टि. घृष्टिः स्त्री घर्षणस्पर्द्धाविष्णुकान्तासु ना किरौ, मे. घृष्टिः स्पर्द्धाघर्षणयो र्विष्णुकान्तावराहयोः, हे. घृष्टिः सप्राद घर्षणे विष्णुकान्तास्पर्द्धाकिरिष्वपि, वि. शूकरे पुंसि घृष्टिः सप्रात् स्पर्धाधर्षणयोः स्त्रियाम्, त्रि.

घोर. घोरः सप्रादभिसारकः, अने. घोरं भीमे हरे घोरः, वि. घोरो भीमे हरेऽपि च, मे. घोरो हरे दारुणे च, हे.

घोण्टा. घोण्टा तु बदरीपूगहट्टयोरपि योषिति, मे. घोण्टा पूगबदरयोः, हे. घोण्टा तु बदरे पूगे, वि, त्रि.

घोष. घोष आभीरपल्ल्यां सप्राङ्गोपालाध्वनि घोषके। कांस्ये चाम्बुदनादे ना घोषा मधुरिकौषधौ, मे. घोषस्तु घोषके ध्वाने गोपालाभीरपल्लिषु। घोषा तु शतपुष्पायां घोषः कांस्येऽम्बुदध्वनौ, वि. घोषः कांस्ये स्वने गोपघोषकाभीरपल्लिषु। घोषा तु शतपुष्पायाम्, हे. घोषः शब्दाभीरनिवासयोः, त्रि.

घोषयित्नु. घोषयित्नुस्तु विप्रकोकिलयोः पुमान्, मे. घोषयित्नुर्द्विजे पिके, वि. घोषयित्नुः पिके विप्रे, हे.

घ्राण. घ्राणं क्लीवं नासिकायां घ्राते स्याद् वाच्यलिङ्गकम्, मे. घ्राणं घ्राते च नासायाम्, वि. घ्राणन्तु घ्रातघोणयोः, हे. नासिका-

भ्रातयो भ्रीणम्, त्रि.

ङ. ङः पुमान् विषये ख्यातः स्पृहायां विषयस्त्र च, मे. संज्ञा को भद्रकान्तिश्च दयाङ्गल्यग्रसंस्थितः । क्लीववक्तृश्च भर्गो ङकारश्चानुनासिकः, मा.

च. चान्वाचयसमाहारेतरेतरसमुच्चये, ञ. चान्वाचये समाहारेऽप्यन्योन्यार्थे समुच्चये । पक्षान्तरे तथा पादपूरणेऽप्यवधारणे, मे, वि. चान्योन्यार्थसमाहारान्वाचयेषु समुच्चये, हे. च पादपूरणे पक्षान्तरे हेतौ विनिश्चये, त्रि. चश्चण्डेशे पुमानुक्तः कच्छपे चन्द्रचौरयोः, मे. हली कूर्मेश्वरो लक्ष्मी वामबाह्वादिगन्नाया । चित्रधारा चञ्चलश्च चकारः संस्मृतो बुधैः, मा.

चक्र. चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्त्तेऽपि, मे. चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः । ग्रामजाले कुलालस्त्र भाण्डे राष्ट्रास्त्रयोरपि । अम्भसामपि चावर्त्ते, वि. चक्रं प्रहरणे गणे । कुलालाद्युपकरणे राष्ट्रे सैन्यरथाङ्गयोः । जलावर्त्ते दम्भे चक्रः कोके, हे. चक्रं राष्ट्रेऽपि, अ. चक्रः कोके व्रजे पुंसि क्लीवं सैन्यरथाङ्गयोः । ग्रामजाले कुम्भकारभाण्डे राष्ट्रे च दृश्यते, त्रि. चक्रः पक्षिविशेषस्य रथाङ्गं चक्रमायुधम् । चक्रं राजत्रश्च सङ्घश्च चक्रं व्यावर्तनं मतम्, अने.

चक्रधर. अथ चक्रधरोऽजेऽहौ ना त्रिषु ग्रामजालिनि, मे. चक्रधरो हरौ सर्पे वाच्यवद्ग्रामजालिनि, वि. चक्रधरो विष्णुसर्पचक्रिषु ग्रामजालिनि, हे. सर्पे विष्णौ चक्रधरः, त्रि.

चक्रवाट. चक्रवाटः क्रियारोहे पर्यन्ते च शिखातरौ, मे, वि. चक्रवाटस्तु पर्यन्ते क्रियारोहे शिखातरौ, हे.

चक्रवाड. चक्रवाडोऽद्रिभेदे स्यात् चक्रवाडन्तु मण्डले, वि, मे. चक्रवाडं गणे चक्रवाडोऽद्रौ चक्रवालवत् हे.

चक्रवाल. चक्रवालोऽद्रिभेदे स्यात् चक्रवालन्तु मण्डले, वि, मे.

V. चक्रवाड.

चक्राङ्ग. चक्राङ्गी कटुरोहिण्यां चक्राङ्गो मानसौकसि, मे, वि. चक्राङ्गः श्वेतगरुति चक्राङ्गी कटुरोहिणी, हे.

चक्राट. चक्राटो विषवैद्येऽपि धूर्त्तदीनारयोरपि, मे, वि. चक्राटो धूर्त्तदीनारविषवैद्येषु, हे.

चक्रिन्. चक्री जालिकभित्कोककुलालग्रामजालिकसूचके, मे. चक्री कुलालवैकुण्ठकोकाहिग्रामजालिषु, वि. चक्री कोके कुलालेऽहौ वैकुण्ठे चक्रवर्त्तिनि, हे. चक्रिणो विष्णुभुजगकुलालग्रामयाजिनः, त्रि.

चक्षुष्य. चक्षुष्यः केतके पुण्डरीकसंज्ञकपादपे। कुलत्थिकासुभगयोः स्त्रियामचिह्नितेऽन्यवत्, मे. चक्षुष्यः केतके पुण्डरीकवृक्षे रसाञ्जने। कुलत्थिकासुभगयोश्चक्षुष्याऽचिह्नितेऽन्यवत्, वि. चक्षुष्यः सुभगे पुण्डरीकवृक्षे रसाञ्जने। कनकेऽचिह्निते चापि चक्षुष्या तु कुलत्थिका, हे. चक्षुष्यं सुभगे चक्षुर्हिते स्त्री केतकेऽपि च, त्रि.

चङ्कुर. चङ्कुरः स्यन्दने वृक्षे, मे, हे. चङ्कुरो रथवृक्षयोः, वि.

चङ्ग. चङ्गस्तु शोभने दक्षे, मे. चङ्गः शोभनदक्षयोः, वि.

चञ्चल. चञ्चलोऽनिलकामिनोः। चञ्चला तु तडिल्लक्ष्म्योः, हे. चञ्चला तु तडिल्लक्ष्म्योश्चञ्चलः कामुकेऽनिले, वि, मे.

चञ्चा. चञ्चा तु नलनिर्माणे तृणनिर्मितपूरुषे, मे. चञ्चो नलादिनिर्माणे चञ्चा तु तृणपूरुषे, वि.

चञ्चु. चञ्चुस्त्रोट्यां स्त्रियां पुंसि गोनाडीके व्यडम्बके, मे. चञ्चुः पञ्चाङ्गुले त्रोट्यां गोनाडीकेऽपि पठ्यते, वि. चञ्चुः पञ्चाङ्गुले त्रोट्याम्, हे.

चटक. चटकः कलविङ्के स्यात्चटका तत्स्त्र्यपत्ययोः, वि.

चटु. चटुश्चाटौ पिचण्डे च व्रतिनामासने पुमान्, मे. चटु चाटुपिचण्डयोः। व्रत्यासने, हे. देहांशे वर्णने चटुः, त्रि. चटुश्चाटौ पिचण्डे च व्रतिनामासनान्तरे, वि.

चण्ड. चण्डो ना तिन्तिडीवृक्षे यमकिङ्करदैत्ययोः। चण्डी का-

त्यायनीदेव्यां हिंस्राकोपनयोषितोः। चण्डा धनहरीशङ्खपुष्प्योस्त्रिष्वति-कोपने, मे. चण्डो दैत्यान्तरे तीव्रे चण्डो दासे यमस्य च। चण्डा धनहरीशङ्खपुष्प्योश्चण्डोऽतिकोपने। चण्डी कात्यायनीहिंस्राकोपनस्त्रीषु सम्मता, वि. चण्डस्तु यमदासेऽतिकोपने। तीव्रे दैत्यविशेषे च चण्डी तु शिवयोषिति। चण्डा धनहरीशङ्खपुष्प्योः, हे. चण्डौषधिः खर-श्चण्डः, त्रि.

चण्डालिका. चण्डालिका किन्नरायामुमायामौषधीभिदि, मे, वि. चण्डालिकौषधीभिदि। कन्दरायामुमायाञ्च, हे.

चण्डि(न्द्रि)ल. चन्द्रिलः पुंसि वास्तूकशाके भर्गे च नापिते, मे. चण्डिलो नापिते ख्याते हरवास्तुकशाकयोः, वि. चण्डिलो नापिते वास्तुके रुद्रे, हे.

चतुःषष्टि. चतुषष्टिः कलासंख्याभेदयो र्बह्वृचि स्त्रियाम्, मे. चतुःषष्टि र्बह्वृचेऽपि चतुःषष्टिः कलास्वपि, वि.

चतुर. चतुरश्चातुरकवत् चक्रगण्डौ नियन्तरि। एतौ सप्राता-सुभौ नेत्रगोचरे चाटुकारिणि, वि. चतुरो नेत्रगोचरे। चटुकारे चक्र-गण्डौ अपि चातुरको यथा, हे. v. चातुर-क.

चतुष्क. चतुष्की मशकहर्यां पुष्करिण्यन्तरेऽपि च, हे, मे.

चतुष्पथ. चतुष्पथं चतुर्मार्गे सङ्गमे ब्राह्मणेऽपि ना, मे. चतुष्पथ-श्चतुर्मार्गे सङ्गमेऽपि द्विजेऽपि च, वि. चतुष्पथश्चतुमार्गसङ्गमे ब्राह्मणे-ऽपि च, हे.

चतुष्पद. चतुष्पदो तु पदेत्र ना पशौ च करणान्तरे, मे. चतुष्पदः स्त्रीकरणे गवाश्वादिपशुष्वपि, वि. चतुष्पदो गवादिषु। स्त्रीणां करण-भेदे च, हे.

चत्वर. चत्वरं स्थण्डिलेऽङ्गने, मे, वि. चत्वरं सप्रात् पथाश्लेषे स्थण्डिलाङ्गनयोरपि, हे. चत्वरं प्राङ्गणेऽपि च, ह.

चत्वाल. चत्वालो होमकुण्डे सप्रात् पुंसि दर्भेऽपि दृश्यते, मे. च-

त्वालो होमकुण्डे सत्राद्, गर्भे च, वि. चत्वालो यज्ञकुण्डकगर्भयोः, हे.

चन. चन विस्मये साकल्ये, मे.

चन्दन. चन्दनी तु नदीभिदि। चन्दनोऽस्त्री मलयजे कुङ्कुमे च नपुंसकम्, मे. चन्दनं मलयोद्भवे। चन्दनः कपिभेदे स्यान् नदीभेदे तु चन्दनी, वि. चन्दनो वानरभिदि श्रीखण्डे चन्दनी नदी, हे.

चन्दिर. चन्दिरोऽनेकपे चन्द्रे, मे, वि. चन्दिरश्चन्द्रहस्तिनोः, हे.

चन्द्र. चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु, मे. चन्द्रः सुधांशुकर्पूरकाम्पिल्लस्वर्णवारिषु, वि. चन्द्रोऽम्बुकाम्ययोः। स्वर्णे सुधांशौ कर्पूरे काम्पिल्ले मेचकेऽपि च, हे. स्वर्णेऽपि भूरिचन्द्रौ द्वौ, अ. चन्द्रः शशिनि कर्पूरे, त्रि. शशाङ्कस्वर्णयोश्चन्द्रः, अने.

चन्द्रकान्त. चन्द्रकान्तस्तु पुंसि स्यान् मणिभेदे च कैरवे, मे. चन्द्रकान्तोऽश्मभेदे स्यात् चन्द्रकान्तं च कैरवे, वि. चन्द्रकान्तो रत्नभेदे चन्द्रकान्तन्तु कैरवे, हे.

चन्द्रहास. चन्द्रहासो दशग्रीवकरवालेऽसिमात्रके, मे, वि. चन्द्रहासोऽसिमात्रके। दशग्रीवकृपाणे च, हे.

चन्द्रिल. v. चण्डिल.

चन्द्रोदय. चन्द्रोदयो विताने स्यान् तथा चन्द्रोदयौषधौ, वि, चन्द्रोदयौ शशुदयोल्लोचौ चन्द्रोदयौषधे, हे.

चपल. चपलः पारदे मीने चोरके प्रस्तरान्तरे। चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च। नपुंसकन्तु शीघ्रे स्याद्, वाच्यवत् तरले खले, मे. चपलश्चोरके खले। चणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे। मीने च चपला तु स्यात् पिप्पल्यां विद्युति श्रियाम्। पुंश्चल्याम्, हे. चपलः पारदे मीने चोरके प्रस्तरान्तरे। चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च। चपलं चणिके शीघ्रे चपलश्चिकुरे खले, वि. चपलः पारदेऽपि च। चपलाः पिप्पलीलक्ष्मीपुंश्चलीविद्युतः स्मृताः, त्रि.

चमर. चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः, मे. चमरं

चामरे प्राज्ञ मञ्जरीमृगभेदयोः। चमरी, वि. चमरश्चामरे दैत्ये च चमरी तु मृगान्तरे, हे.

चमस. चमसो यज्ञपात्रस्य भेदे ऽस्त्री पिष्टके स्त्रियाम्, मे.

चमू. चमूः सेनाविशेषे च सेनामात्रे च योषिति, मे. V. पृतना.

चय. चयः समूहे प्राकारमूलबन्धे समाहृतौ, मे, वि. चयः प्राकार-पीठभूः। समूहोऽपि, हे.

चर. चरोऽक्षद्यूतभेदे च भौमे चारे त्रसे चले, मे. चरो द्यूत-प्रभेदे स्यात् चारजङ्गमयोश्चले, वि. चरः स्याज्जङ्गमे स्पशे। चले द्यूत-प्रभेदे च, हे.

चरण. चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च । भ्रमणे भक्षणे चापि नपुंसक उदाहृतः, मे. चरणं बह्वृचादौ स्यात् मूले गोत्रे पदेऽपि च। चरणं भ्रमणेऽस्त्री च चरणं रासभध्वनौ, वि. चरणो मूलगोत्रयोः। बह्वृचादौ च पादे च चरणं भ्रमणेऽदने, हे. वेदांशे बह्वृचादौ च अङ्घ्रौ पादेऽपि चास्त्रियाम्। चरणम्, त्रि.

चराचर. चराचरं वाच्यलिङ्गमिङ्गे जगति न द्वयोः, मे. चराचरं स्याज्जगति वाच्यवत् जङ्गमेङ्गयोः, वि. चराचरं जङ्गमे स्याद् द्रङ्ग-विष्टपयोरपि, हे.

चरु. अथ चरुः पुमान् हव्यान्नभाण्डयोः, मे. चरु र्भाण्डे च हव्यान्ने, वि. चरु हव्यान्ने भाण्डे च, हे.

चर्चरीक. चर्चरीको महाकाले केशविन्यासशाकयोः, मे, वि.

चर्चा. चर्चा चिन्तास्थासकयोश्चर्चिकायान्तु योषिति, मे. चर्चा स्थासकचिन्तयोः। चर्चिकायाश्च, वि. चर्चा स्याच्चर्ममुण्डायां चिन्तास्थासक-योरपि, हे. अथ स्थासकतर्कयोः। चर्चिकायाश्च चर्चा स्यात्, त्रि. चिन्ता-यामपि च स्त्री, श.

चर्पट. चर्पटः स्फारविपुले चपेटे पर्पटेऽपि च, मे, वि. अथ चर्पटश्चपेटे स्फारविपुले पर्पटे, हे.

चर्मन्. चर्म सम्पौ च फलके, मे. चर्म त्वचि स्फुरे, हे. चर्म सन्नाहफलकत्वचोः, वि.

चर्मकार. चर्मकारः पादुकाकृति स्त्रियां चर्मकषौषधौ, मे. चर्मकारः स्मृतः पादुकाकृति चर्मकषौषधे। चर्मकारी च कथिता, वि. चर्मकारः पादुकाकृति चर्मकार्योषधीभिदि, हे.

चर्मण्वती. चर्मण्वती नदीभेदे कदलीपादपे स्त्रियाम्, मे. चर्मण्वती नदीभेदे कदलीपादपेऽपि च, वि. चर्मण्वती नदीभिदि। कदल्याम्, हे. चर्मण्वत्यौ नदीरम्भे, त्रि.

चर्मिन्. चर्मी फलकपाणौ सन्नाद् भूर्जे भृङ्गिरिटावपि, मे, वि. चर्मी भूर्जे फलकिभृङ्गिणोः, हे. भूर्जे फलकपाणौ च चर्मी, त्रि.

चल. चला लक्ष्म्यां पुमान् कम्पे कम्पने त्वभिधेयवत्, मे. चलः कम्पे चला श्रियि, वि.

चलुक. चलुकः प्रसृतौ भाण्डभेदे चुलुकवत् पुमान्, मे. चलुकः प्रसृतौ भाण्डप्रभेदे चुलुको यथा, हे. v. चुलुक.

चलन. चलनं भ्रमणे कम्पे कम्पे तु वाच्यलिङ्गकम्। चलनी वस्त्रघर्घर्यां वारिभेदेऽपि च क्वचित्, मे. चलनं कम्पनं कम्पे कम्पे चलनकम्पनौ। चलनी वस्त्रघर्घर्यां वारिभेदेऽपि च क्वचित्, वि. चलनः पादकम्पयोः। चलनं कम्पे चलनी वारिभिद्वस्त्रघर्घरी, हे. कम्पे ना चलनं कम्पे चलनी वस्त्रघर्घरी, त्रि.

चव्य. चव्यन्तु चविके क्लीबं चचायामपि योषिति, मे. चव्यं तु चविके चव्या शतपर्वोग्रगन्धयोः, वि. चव्या सन्नात् चावकाग्रम..र्वणोः, हे.

चषक. चषकोऽस्त्री सुरापात्रे मधुमद्यप्रभेदयोः, मे. चषको मद्ये सरके मद्यभाजने, हे. चषकन्तु सुरापात्रे मद्यमद्यप्रभेदयोः, वि. चषकं सरकेऽपि च, त्रि.

चातुर. चातुरो नेत्रगोचरे। चाटुकारिनियन्त्रोश्च त्रिषु दाक्ष्ये तु चातुरी। अङ्कगण्डे च पुंसि सन्नात् मे.

चातुरक. अथ चातुरकश्चक्रगण्डौ पुंस्यभिधेयवत् । गोचरे लोचनस्यापि चाटुकारे नियन्तरि, मे. V. चतुर.

चामर. चामरं चामरापि च । दण्डे च बालव्यजने, मे.

चामरपुष्प. भवेच्चामरपुष्पन्तु पूगे काशाम्रकेतके, मे. भवेत् चामरपुष्पस्तु चूते केतककाशयोः, वि.

चाम्पेय. चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेसरे, मे, त्रि. चाम्पेयो हेम्नि किञ्जल्के चम्पके नागकेसरे, हे.

चार. चारः पियालवृक्षे स्याद् गतौ बन्धापसर्पयोः, मे, वि. चारो बन्धापसर्पयोः । गतौ पियालवृक्षे च, हे. चारो बन्धापसर्पयोः, त्रि.

चारक. चारकः पालकेऽश्वादेः स्यात् सञ्चालकबन्धयोः, मे. चारकः पालकेऽश्वादेः स्यात् सञ्चारकबन्धयोः, वि. चारकोऽश्वादिपाले स्याद् बन्धे सञ्चारकेऽपि च, हे. चारको भोजके बन्धे, त्रि.

चारु. चारु बृहस्पतौ पुंसि शोभनेऽप्यभिधेयवत्, मे.

चार्वी(र्बी). चार्वी तु शोभनाबुद्ध्योः जर्योत्स्नाधनदभार्ययोः, मे. चार्बी तु शोभनाबुद्ध्योः, वि.

चास. चास इक्षुपक्षिभिदोः पुमान्, मे. चास इक्षुपक्षिभिदोः, हे.

चिकुर. चिकुरस्तरलागयोः । पक्षिवृक्षभिदोः केशे गृहबभ्रौ सरीसृपे, मे. चिकुरश्चञ्चले केशे गृहबभ्रुभुजङ्गयोः । पक्षिद्रुभेदयोः शैले, वि. चिकुरोऽहौ गृहबभ्रौ केशे चञ्चलशैलयोः । पक्षिवृक्षभिदोश्चापि, हे. चिकुरौ वृक्षभित्कचौ, त्रि. चिकुरौ केशचञ्चलौ, अने.

चित. चितं छन्ने त्रिषु चिता चित्यायां संहतौ स्त्रियाम्, मे. चिताचिती । मृतार्थदारुषु चये, हे. चितश्छन्ने चुल्लिकायां चित्यासंहतिचित्ययोः, वि.

चिति. चितिश्चित्यावृन्दयोः स्त्री, मे, हे. चितिः समूहे चित्यायाम्, वि. V. चिता,

चित्य. चित्यं मृतकचैत्येऽत्र स्यात् चित्या मृतचितौ स्त्रियाम्, मे. चितेऽत्र मृतकचैत्ये स्यात् चित्या मृतचितावपि, वि. चित्यं मृतकचैत्ये स्यात् चित्या मृतचितावपि, हे.

चित्र. चित्रं स्यादद्भुतालेख्यतिलकेषु विहायसि। चित्राऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च। नक्षत्राप्सरोऽहिभेदेषु कर्बुरे चाभिधेयवत्, वि. चित्रं खे तिलकेऽद्भुते। आलेख्ये कर्बुरे चित्रा त्वाखुपर्णीसुभद्रयोः। गोडुम्बाप्सरसो र्दन्त्यां नक्षत्रोरगभेदयोः, हे. चित्राऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च। मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम्। तिलकालेख्ययोः क्लीवं कर्बुराद्भुतयोरपि। तद्युक्तयोस्त्वन्यलिङ्गम्, मे. आलेख्याश्चर्ययोश्चित्रम्, अ. कर्बुरे तिलके चित्रं सुभद्रातारयोः स्त्रियाम्, त्रि.

चित्रक. चित्रकं तिलके ना तु व्याघ्रभिच्चित्रपाठिषु, मे. चित्रकः स्यात् तरक्षुव्याघ्रभेदयो र्भेषजान्तरे, वि. चित्रकस्तु चित्रकारे द्रुमौषधिविशेषयोः, हे. चित्रकं चित्रके क्लीवं व्याघ्रैरण्डौ च चित्रकौ, त्रि. चित्रकं तिलकं प्रोक्तं चित्रकः श्वापदो मतः। चित्रको मूलजातिश्च चित्रकोऽप्यन्तको मतः, अने.

चित्रगुप्त. चित्रगुप्तस्तु पुंसि स्याद् यमे तस्य च लेखके, मे. चित्रगुप्तः कृतान्ते स्यात् लेखके चास्य सम्मतः, वि. चित्रगुप्तस्तु कृतान्ते तस्य लेखके, हे.

चित्रभानु. चित्रभानुः पुमान् वैश्वानरे चाहस्करेऽपि च, मे. चित्रभानुः खगेऽनले, वि. चित्रभानुस्तु कृतान्तदिनेशयोः, हे. सूर्यवह्नी चित्रभानू, अ.

चित्ररथ. अथ चित्ररथः सूर्यगन्धर्वान्तरयोः पुमान्, मे. चित्ररथः स्याद् गन्धर्वे रवौ विद्याधरान्तरे, वि. चित्ररथो विद्याधरे गन्धर्वसूर्ययोः, हे.

चित्राटीर. चित्राटीरो विधौ भालमङ्कितं येन तत्र च। घण्टाकर्णोपहाराय कृतच्छागासृग्बिन्दुषु, मे. चित्राटीरो विधौ भालमङ्कितं

येन तत्र च। घण्टाकर्णोपहाराय छागाज्जविन्दुभिः, वि. चिल्लाटीरो घण्टाकर्णबलिश्छागाज्जविन्दुभिः। अङ्कितभाले चन्द्रे च, हे.

चिपिट. चिपिटः खाद्यभेदे ना त्रिषु पिछितविस्तृते, मे. चिपिटः पुमः। पृथुकेऽपि च तते, हे. चिपिटः खाद्यभेदेऽपि चिपिटो विस्तृतेऽन्यवत्, वि.

चिरजीविन्. चिरजीवी द्विकाणयोः, मे, वि. चिरजीवी तु वायसे। अजे च, हे.

चिर(रि)ण्टी. चिरिण्टी तु सुवासिन्यां स्याद् द्वितीयवयःस्त्रियाम्, मे. चिरण्टी तु सुवासिन्यां स्याद् द्वितीयवयःस्त्रियाम्, वि. चिरण्टी तु सुवासिनी। तरुणी च, हे.

चिल्लिमीलिका. चिल्लिमीलिका तु कण्ठीभेदे खद्योतविद्युतोः, मे. चिल्लिमीलिका खद्योते कण्ठीभेदे तडित्यपि, हे. कण्ठालङ्कारखद्योतविद्युत्सु चिल्लिमीलिका, त्रि. स्याच्चिल्लिमीलिका कण्ठीभेदे खद्योतविद्युतोः, वि.

चिल्ल. चिल्लः पुमान् क्लिन्ननेत्रे क्लिन्नाक्षेऽप्यभिधेयवत्। आततायिनि संप्रोक्तः चिल्लो स्यात् क्षुद्रवास्तुके, मे. चिल्लः खगे स चुल्लश्च पिल्लवत् क्लिन्नलोचने। क्लिन्नाक्षि, हे. चुल्लचिल्लौ मतौ क्लिन्ने नेत्रे क्लिन्नाक्षि पिल्लवत्। आततायिनि भवेच्चिल्लश्चिल्ली स्याद् गौड़वास्तुके, वि.

चिह्न. चिह्नं लक्ष्मपताकयोः, मे, त्रि. चिह्नं ध्वजे पताकायां, वि. चिह्नमङ्के पताकायाम्, हे.

चीन. चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे, मे. चीनो मृगान्तरे तन्तुव्रीहिदेशांशुकान्तरे, वि. चीनो देशेऽथ तन्तुषु। व्रीहौ वस्त्रे, हे. चीनो वस्त्रव्रीहिभेदे, त्रि.

चीर. चीरं तु गोस्तने वस्त्रे चूडायां सीसकेऽपि च। चीरी कच्छाटिकाभिल्लयोः, वि. चीरी झिल्ल्यां नपुंसकम्। गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः, मे. चीरं वाससि चूडायां गोस्तने सीसपत्रके। चीरी कच्छाटिकाझिल्ल्योः, हे.

चीरक. चीरकोऽधिक्रियालेखे पतङ्गत्रां चीरिका मता, वि.

चीर्णपर्ण. चीर्णपर्णस्तु निम्बेऽपि खर्जूरीभूरुहे पुमान्, मे. चीर्णपर्णस्तु निम्बे स्यात् खर्जूरीभूरुहेऽपि च, वि. चीर्णपर्णः खर्जूरनिम्बयोः, हे. चीर्णपर्णस्तु खर्जूरपिचुमर्दयोः, त्रि.

चीवर. चीवरं वल्कले वस्त्रे, मने.

चुक्र. चुक्रं दृचाम्ले चाङ्गेयेत्रां स्त्रीपुंस्यम्लेऽम्लवेतसे, मे. चुक्रस्त्वम्लेऽम्लवेतसे। चुक्री चाङ्गेरिकायां सत्रात् दृचाम्ले चुक्रमिष्यते, वि. चुक्रस्त्वाम्लेऽम्लवेतसे। दृचाम्ले चुक्री चाङ्गेयेत्राम्, हे.

चुम्बक. चुम्बकश्चुम्बनपरे धूर्तायस्कान्तयोरपि। बहुग्रन्थैकदेशग्राहे घटसत्रोर्ध्वावलम्बने, मे. चुम्बकः सत्राद्बहुगुरुधूर्तायस्कान्तकामुके, वि. चुम्बकः कामुके धूर्ते बहुगुर्वग्रभेदयोः, हे.

चुलुक. चुलुकः प्रसृतौ भाण्डे भेदे चलुकवन्मतः, वि. V. चलुक.

चुल्ल. चुल्ली चितायामुद्धाने, मे. चुल्ली चितायामुद्धाने क्वचिद्वाद्येऽपुरदीरिता, वि. चुल्ली तूद्धाने च, हे. V. चिल्ल.

चुल्लकी. चुल्लकी शिशुमारेऽपि कुण्डीभेदे कुलान्तरे, मे, वि. चुल्लकी कुण्डिकाभेदे शिशुमारे कुलान्तरे, हे.

चूडा. चूडा वडभौ शिखायां बाहुभूषणे, मे. चूडा शिखायां वलभौ चूडा बाहुविभूषणे, वि. चूडा शिखाग्रयोः। बाहुभूषावलभ्योश्च, हे. चूडा शिखिशिरस्यपि, ह.

चूडामणि. चूडामणिः शिरोरत्ने काकचिञ्चाफले पुमान्, मे. चूडामणिः शिरोरत्ने काकचिञ्चाफलेऽपि च, वि. चूडामणिः काकचिञ्चाफले मूर्धमणावपि, हे.

चूडाल. चूडाला तृणजटायां स्त्री चूडावति च वाच्यवत्, मे. चूडाला तृणजटायां सत्रात् चूडावति तु वाच्यवत्, वि. चूडालश्चूडया युक्ते चूडालाऽपि च चक्रला, हे.

चूतक. - चूतकः कूपकेऽप्याम्रे, मे, वि. चूतकः कूप आम्रे च, मे.

चूर्ण. अथ चूर्णी कपर्दके । चूर्णो धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु, मे. चूर्णानि वासयुक्तिषु । चूर्णः क्षोदे क्षारभेदे, हे. चूर्णं गन्धयुतावपि, त्रि. चूर्णः क्षोदे क्षारभेदे चूर्णानि वासयुक्तिषु, वि.

चूलिका. चूलिका नाटकस्याङ्गे कर्णमूले च हस्तिनाम्, मे. चूलिका नाटकाङ्गके । करिणः कर्णमूले च, हे. चूलिका नाटकस्याङ्गे कर्णमूले च दन्तिनाम्, वि. नाटकाङ्गेषु चूलिका, त्रि.

चेत्. चेत् कुत्सितप्रशंसयोः । पक्षान्तरेऽप्यसाकल्येऽ, मे.

चेतन. चेतना संविदि स्त्रियाम् । वाच्यवत् प्राणयुक्ते, मे. चेतना संविदि प्रोक्ता वाच्यवत् प्राणिनि स्मृता, वि. चेतनः स्यात् सहृदयप्राणिनोश्चेतना तु धीः, हे.

चेल. चेलो नीचेऽन्यवच्चेलमंशुके गर्हितेऽन्यवत्, वि. चेलं गर्हितवस्त्रयोः, हे. चेलोऽधमे त्रिषु । नपुंसकन्तु वसने, मे. चेलं वस्त्रेऽधमे त्रिषु, अ.

चेष्टित. चेष्टितं गतिचेष्टयोः, मे.

चैत्य. चैत्यमायतने बुद्धविम्बे चोद्देशपादपे, मे. चैत्यमायतने बुद्धविम्बे चोद्देशपादपे, वि. चैत्यं जिनौकस्तद्बिम्बं चैत्यो जिनसभातरुः । उद्देशवृक्षः, हे. चैत्यमायतने बुद्धविम्बोद्देशकवृक्षयोः, त्रि. चैत्यं बुद्धान्तकेऽपुंल्लिङ्गं देवतायतनेऽपि च, रु.

चैत्र. चैत्रं मृते देवकुले ना भूभृन्मासभेदयोः, मे. चैत्रं मृतकचैतेऽस्यात् चैत्रो मासाद्रिभेदयोः, वि. चैत्रो मासाद्रिभेदयोः । चैत्रं मृतकचैतेऽच, हे. मृते देवकुले चैत्रं ना भूभृन्मासभेदयोः, त्रि.

चोक्ष. चोक्षो गीते शुचौ दक्षे तथाभीक्ष्णमनोज्ञयोः, मे, वि. चोक्षः सुन्दरगीतयोः । शुचौ, हे. शुचौ दक्षे च चोक्षः स्यात्, त्रि.

चोड़. चोड़ः प्रावरणे भूम्नि देशभेदे, मे. चोड़ो देशविशेषे स्यात् चोड़ः प्रावरणान्तरे, वि. चोड़ः कञ्चु,कदेशयोः, हे.

चोद्य. चोद्यं स्यादद्भुते प्रश्ने चोदनार्हे तु वाच्यवत्, मे, वि.

चोद्यन्तु प्रश्ने प्रेर्येऽङ्क,तेऽपि च, हे.

चोर. चोरश्चौरसुगन्धयोः, वि. V. चौर.

चोल. चोलः कूर्पासके पुमान्। नपुंसकं तु वसने, मे. चोला कूर्पासके देशे, हे.

चोलकिन्. चोलकी तु करीरे स्यान् नारङ्गे किष्कुपर्वणि, वि, मे. चोलकी नागरङ्गे च करीरे किष्कुपर्वणि, हा. चोलकी तु नागरङ्गे किष्कु-पर्वकरीरयोः, हे.

चौर. चौरः पाटच्चरेऽपि स्यात् चौरपुष्पौषधावपि, मे. चौरो दस्युसुगन्धयोः, हे.

चौल. चौलं कर्मणि मुण्डने, हे.

च्युप. च्युपः पवनयुद्धयोः, वि.

छ. छाच्छादने स्त्रियां ख्याता निर्मलेऽन्यवदिष्यते, मे. एक-नेत्रश्च मुषली वामकूर्परगो द्युतिः। त्रिविन्दुकलया चारी च्छकारः श्लेष्मकाभिधः, मा.

छगल. छगलं नीलवस्त्रे ना च्छागे स्त्री वृद्धदारके, मे. छगल-श्छागे च्छगली च्छागमातरि। वृद्धदारकभेषजेऽच्छगलं नीलवाससि, वि. छगलश्छागे च्छगली वृद्धदारकभेषजे। छगलं तु नीलवस्त्रे, हे.

छत्र. छत्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयोः। नपुंसकश्चातपत्रे, मे. छत्रमातपवारणे। छत्रा मधुरिकायां स्यात् कुस्तुम्बुरुशिलीन्ध्रयोः, वि. छत्रं स्यादातपत्राणे च्छत्रा मधुरिकौषधौ। धान्याके च शिलीन्ध्रे च, हे.

छत्रभङ्ग. छत्रभङ्गोऽपि वैधव्ये स्वातन्त्र्यनृपनाशयोः, मे, वि. छत्र-भङ्गो नृपक्षये। स्वातन्त्र्ये विधवात्वे च, हे. वैधव्ये नृपनाशे च च्छत्र-भङ्गः प्रकीर्तितः, वि.

छद. छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः, मे, वि. छदः पत्रे च ग्रन्थिपर्णतमालयोः, हे. पलाशे गरुति च्छदः, वि.

छदन. छदनं च दले पत्ने पिधाने, मे. छदनं पत्नपत्रयोः, वि. छदनं पर्णे गरुति, हे.

छद्मन्. छद्म व्याजापदेशयोः, मे. छद्म शाठ्यापदेशयोः, वि. छद्म शाठ्येऽपदेशेऽप्यतिकर्मणि, हे.

[illegible]

अभिप्रायवशौ च्छन्दौ, अ.

छन्दस्. छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः, मे, वि. छन्दः पद्येच्छयोः श्रुतौ, हे. छन्दः पद्येऽभिलाषे च, अ. छन्दः पद्यश्रुतीच्छासु, त्रि.

छन्न. छन्नन्तु रहसि क्लीवं छादिते वाच्यलिङ्गवत्, मे. छन्नं रहश्छादितयोः, वि, हे.

छर्दन. छर्दनं वमने क्लीवं निम्बालम्बुषयोः पुमान्, मे. छर्दनोऽलम्बुषे निम्बे छर्दनं वमनान्तरे, वि. छर्दनोऽलम्बुषे निम्बे छर्दनं वमनेऽपि च, हे. अथालम्बुषे पुमान्। निम्बेऽपि छर्दनं वान्ते, त्रि. छर्दनोऽलम्बुषे निम्बे, शा.

छल. छलं स्खलितशाठ्ययोः, मे. छलं तु स्खलिते व्याजे, वि. छलं छद्मस्खलितयोः, हे, त्रि.

छल्ली. छल्ली वीरुधि सन्ताने वल्कले कुसुमान्तरे, मे, वि. छल्ली सन्तानवीरुधोः। वल्कले पुष्पभेदे च, हे.

छवि. छविः शोभारुचो र्योषित्, मे. छविः शोभारुचो र्मता, वि. छविस्तु रुचि शोभायाम्, हे.

छाया. छाया सूर्यप्रियाकान्तिप्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोः कान्तिसच्छोभापंक्तिषु स्त्रियाम्, मे. छाया सत्रादातपाभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोः कान्तिसच्छोभापंक्तिषु स्मृता, वि. छाया पंक्तौ प्रतिमायां अर्कयोषित्यनातपे। उत्कोचे पालने कान्तौ शोभायां च तमस्यपि, हे. छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः,

अ. कान्यनातपयोश्छाया, अने.

छित्वर. छित्वरं छेदनद्रव्ये छित्वरो धूर्तवैरिणोः, वि. छित्वरो वैरिधूर्त्तयोः। छित्वरं छेदनद्रव्ये, हे.

छिदिर. छिदिरः पावके रज्जौ करवाले परश्वधे, मे, वि. छिदिरोऽग्नौ परश्वधे। करवाले च रज्जौ च, हे.

छिदुर. छिदुरश्छेदनद्रव्ये धूर्ते वैरिणि च त्रिषु, मे.

छिद्र. छिद्रं दूषणरन्ध्रयोः, मे. छिद्रं विवररन्ध्रवत्। गर्त्ते दोषे, हे. v. विवर.

छिन्न. छिन्नं छत्ते त्रिलिङ्गं स्यादृ गुडूच्यामपि योषिति, मे. छिन्नं भिन्ने तु वाच्यवत्। छिन्नाऽच्छतायां पुंश्चल्याम्, वि. छिन्ना स्यादच्छतेत्वरी। छिन्नं भिन्ने, हे.

छुप. छुपः स्पर्शनयोः, मे, वि.

छेक. छेको गृहाश्रितखगपक्षिणो नागरे त्रिषु, मे. छेको विदग्धे विश्वस्तखगनीड़जयोरपि, हे. छेको विदग्धे च्छेकश्च विश्वस्तखगपक्षिणोः, वि. छेकः षड़ङ्घ्रिवक्रयोः, हा. गृहासक्ते पक्षिमृगे च्छेको नागरिके त्रिषु, त्रि.

छेदन. छेदनं भिदि। कर्तने, मे. छेदनं कर्तने भेदे, वि. छेदनं कर्तने भिदि, हे.

ज. जो ना मृत्युञ्जये जन्यां तातमात्रे जनार्दने, मे. स्त्रियेगे जयन्तो जपजः शूली च चतुराननः। मणिबन्धगतो वामे जकारो जनकोत्तमः, मा.

जकुट. जकुटं वार्ताकुपुष्पे जकुटो मलये शुनि, मे. जकुटस्तु वार्ताकुकुसुमे शुनि। मलये, हे. जकुटो मलये ख्यातो वार्ताकुकुसुमे शुनि, वि.

जगत्. जगत् स्यात् पिष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु। जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च, मे. जगदाख्या स्मृता वाते विष्टपे जङ्गमेऽपि

च। जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च, वि. ना वाते पिष्टपे जगत्, त्रि. जगल्लोकेङ्गवायुषु, हे. जगती छन्दसि चितौ। जम्बूवप्रे जने लोके, हे. जगती जगति छन्दोविशेषेऽपि चितावपि। जगदिङ्गेऽपि, श्र. जगती राजप्रधानलोकेऽपि, ह.

जगल. जगलो मदनद्रुमे। भेदके पिष्टमद्ये च पुंसि धूर्तेऽभिधेयवत्, मे. जगलः पिष्टमद्ये च भेदके मदनद्रुमे। कितवे, वि. जगलो मदनद्रुमे। भेदके कितवे पिष्टमद्ये, हे.

जघन. जघनं च स्त्रियाः श्रोणिपुरोभागे कटावपि, मे. जघनं च स्त्रियाः श्रोणिपुरोभागे कटीरके, वि. जघनं कटौ। स्त्रियाः श्रोणिपुरोभागे, हे.

जघन्य. जघन्यं मेहने क्लीबं चरमे गर्हितेऽन्यवत्, मे. जघन्यं चरमे शिश्ने जघन्यं गर्हितेऽन्यवत्, वि. जघन्यं शिश्ने गर्ह्येऽल्पे, हे. जघन्योऽन्त्योऽधमेऽपि च, श्र.

जघन्यज. जघन्यजः कनीयसि। वृषले, मे. जघन्यजोऽनुजे शूद्रे, वि, त्रि. जघन्यजोऽनुजन्मानि। शूद्रे च, हे.

जङ्गल. जङ्गलं निर्जनस्थाने त्रिलिङ्गं पिशितेऽस्त्रियाम्, मे. जङ्गलो जलनिर्मुक्तदेशे मांसे च जङ्गलम्, वि. जङ्गलो निर्जने देशे पिशितेऽपि, हे. जङ्गलो निर्जने देशे त्रिलिङ्गः पिशितेऽस्त्रियाम्, त्रि.

जटा. जटा लग्नकचे मूले मांस्यां शच्चे पुन जंटी, मे. जटा केशविकारे मांसिमूलयोः, हे. जटा लग्नकचे मूले शचमांसिकयो जंटी, वि. मूले लग्नकचे जटा, श्र.

जटाटङ्क. जटाटङ्को हरेऽपि च, श्रा.

जटायु. जटायुः पुंसि सम्पातेः कनीयसि च गुग्गुलौ, मे. जटायुर्गुग्गुलतरौ जटायु विहगान्तरे, वि. जटायु गुग्गुलो खगे, हे.

जटायुस्. जटायुः पुंसि सम्पातेः कनीयसि च गुग्गुलौ, मे.

जटिल. जटिला पिप्पलीमांस्यो र्जटायुक्ते तु वाच्यवत्, मे. जटि-

लस्तु जटायुक्ते जटिला मांसिकौषधौ, वि. जटिलो जटी। जटिला तु मांसिकायाम्, हे.

जठर. जठरो न स्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रिषु, मे. कुक्षौ वृद्धे च जठरम्, वि. जठरः कुक्षिवृद्धयोः। कठिने च, हे. जठरः कठिनेऽपि स्यात्, अ.

जड़. जड़ा स्त्रियाम्। शूकशिम्बयां हिमग्रस्तमूकाप्रज्ञेषु तु त्रिषु, मे. जड़ो मूर्खो हिमग्रस्ते शूकशिम्बयां जड़ा मता, वि. जड़ो मर्खे हिमाघाते जड़ा स्याच्छूकशिम्बिका, हे.

जतुक. जतुकाऽजिनपत्रायां जतुकं हिङ्गुलाक्षयोः, मे, वि. जतुकं हिङ्गुलाक्षयोः। जतुका चर्मचटका, हे. लाक्षाऽपि जतुका प्रोक्ता, श.

जन. जनो लोके महर्लोकात् परलोके च पामरे। जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि, मे. जनो लोके जगद्भेदे पृथग्जने। जनी स्नुषावनितयोः, हे. जनो लोके महर्लोकात् परलोके च पामरे। जनी सीमन्तिनीवध्वोरुत्पत्तौ च जनिर्मता, वि.

जनक. जनकः पितृभूपयोः, हे. जनकः पितृराजर्ष्योः, वि. जनकः पितृभूभुजोः, मे.

जनन. जननी तु दयामात्रो र्जननं वंशजन्मनोः, मे.

जनपद. भवेज्जनपदो जानपदोऽपि जनदेशयोः, मे. भवेज्जनपदो देशे जने जानपदोऽपि च, वि. जनपदः स्यात् पुनर्जनदेशयोः, हे. देशे जने जनपदः, त्रि.

जनि. V. जन.

जन्य. जन्यं हट्टे परीवादे संग्रामे च नपुंसकम्। जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान्। त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः। वरस्निग्धे, मे. जन्यं हट्टे परीवादे संयुगे जनके पुनः। जन्यः स्यात् जननीये च जन्या मातृसखीमुदोः। जन्यो वरवधूज्ञातिप्रियभृत्यहितेऽपि च, वि. जन्यं स्याज्जनवादेऽपि, अ. युद्धे हट्टे च जन्यं स्यात्, त्रि.

जन्यो जामातृवत्सले। जनके जननीये च नवोढानुचरादिषु। जन्यं कौलीने युद्धे जन्यो मातृसखीमुदोः, हे.

जन्यु. अथ जन्युः स्यात् पुंसि प्राण्यग्निधातृषु, मे. जन्युः प्राण्यग्निधातृषु, वि. जनुत्रः सत्राज्जन्तुमात्रे च पावके परमेष्ठिनि, हे.

जम्बाल. जम्बालः शैवले पङ्के, मे. जम्बालं शैवले पङ्के, वि. जम्बालं कर्दमे शैवलेऽपि च, हे. जम्बालौ पङ्कशैवलौ, त्रि.

जम्बीर. जम्बीरः प्रस्थपुष्पे सत्रात् पुंसि दन्तशठद्रुमे, मे. जम्बीरं प्रस्थपुष्पाख्यशाके दन्तशठेऽपि च, वि. जम्बीरः प्रस्थपुष्पाख्यशाके दन्तशठद्रुमे, हे.

जम्बुक. जम्बुकः फेरवे नीचे पश्चिमाशापतावपि, मे. जम्बुकः श्वापदे नीचे प्रतीचीदिक्पतावपि, वि. जम्बुको वरुणे फेरौ, हे. जम्बुकौ क्रोष्टुवरुणौ, श्व.

जम्बू. जम्बूः सत्रात् पादपान्तरे। तथा सुमेरुसरिति द्वीपभेदेऽपि च स्त्रियाम्, मे. जम्बूः सुमेरुसरिति द्वीपद्रुमविशेषयोः, वि. जम्बूर्मेरुतरङ्गिण्यां द्वीपवृक्षविशेषयोः, हे.

जम्बूल. जम्बूलस्तु पुमान् जम्बूविटपे क्रकचच्छदे, मे. जम्बूलो जम्बूविटपे जम्बूलः क्रकचच्छदे, वि. जम्बूलः क्रकचच्छदे। जम्बूद्रुमे, हे.

जम्भ. जम्भो दैत्यान्तरे दन्ते जम्बीरे भक्षणेऽपि च, वि, मे. जम्भः सत्राद्दानवान्तरे। दन्तभोजनयोरंशे हने जम्बीरतूणयोः, हे. अथ दानवे। जम्बीरे व्यवहारे च जम्भो दन्तेऽपि चेष्यते, त्रि.

जम्भल. जम्भलः पुंसि जम्बीरे बुद्धदेवान्तरेऽपि च, मे. जम्भलो देवताभेदे जम्बीरेऽपि च जम्भलः, वि, जम्भलः। जम्बीरे देवताभेदे, हे. जम्बीरे देवभेदेऽपि जम्भलः, त्रि.

जय. जयो जयन्ते विजये जया दुर्गाग्निमन्थयोः। जयन्तीतिथिभेदोमासखीपथ्यासु च स्मृता, वि. जयो जयन्ते विजये जयोमातत्सखी तिथिः। पथ्या जयन्त्यग्निमन्थः, हे. जया जयन्तीतिथिभित्पथ्योमातत्सखीषु च। अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे, मे.

जयन. जयनं स्यात् तुरङ्गादिसन्नाहे विजयेऽपि च, मे, वि. जयनं विजयेऽश्वादिसन्नाहे, हे.

जयन्त. जयन्तौ रुद्रभिन्नौ गौरीन्द्रपुत्रीपताकयोः। पुमान् ऐन्द्री रुद्रे भीमे, मे. जयन्तावैन्द्रिगिरिशौ जयन्ती,तापताकयोः। जीवन्त्या-मिन्द्रपुत्र्यां च, हे. जयन्तः शङ्करेऽपि स्यात् जयन्तः पाकशासनौ। जयन्ती पादपे गौर्यामिन्द्रपुत्रीपताकयोः, त्रि. जयन्ती नगरी प्रोक्ता जयन्ती चटकानुजा। जयन्त्योषधिभेदः स्यात् जयन्ती शक्रसम्भवा, श्वे.

जरठ. जरठः कर्कशे पाण्डौ जरठः कठिनेऽन्यवत्, वि. जरठः कर्कशे जीर्णे, हे. जरठः कर्कशे पाण्डौ कठिनेऽभिधेयवत्, मे. जरठ कठिने प्रोक्तः प्राज्ञैः परिणतेऽपि च, श.

जरण. जरणं जीरकेऽजाजिहिङ्गु,सौवर्चलेऽपि च, मे. [जरणं जीरकाजाजिहिङ्गु,सौवर्चलेष्वपि, वि. जरणो रुचके हिङ्गौ जीरके कृष्ण जीरके, हे.

जरायु. जरायुरपि तत्वज्ञिराले (=जटायौ) गर्भाशये पुमान्, मे.

जर्जर. जर्जरं शैवले शक्रध्वजे लिङ्गु जरातुरे, मे. जर्जर स्याद् वासवध्वजजीर्णयोः, हे. जर्जरो वाच्यवत् जीर्णे जर्जरं वासवध्वजे, वि.

जर्जरीक. जर्जरीकं बहुच्छिद्रे जरातुरेऽपि वाच्यवत्, मे. जर्जरीकं बहुच्छिद्रे जर्जरीकं जरातुरे, वि. जर्जरीकं जरातुरे। बहुच्छिद्रेऽपि, शं

जर्ण. जर्णश्चन्द्रे च वृक्षे च, मे, वि. जर्णो जीर्णद्रुमेन्दु,षु, हे.

जल. जलं गोकलने नीरे ह्रीबेरेऽप्यन्यवत् जड़े, मे. जलं गोकलने नीरे ह्रीबेरे च जड़ेऽन्यवत्, वि. जलं गोकलने जड़े। ह्रीबेरे अब्,नि, हे.

जलकरङ्क. अथो जलकरङ्कः स्यात् नालिकेरफलेऽब्ज,जे। घन जललतायाञ्च वारिवाहे च कीर्त्तितः, मे. जलकरङ्कः स्याद्वोधे नारिकेरतरोः फले। शङ्खे, हे. अथो जलकरङ्कः स्यात् नारिकेलफलेऽब्ज,

शङ्खे जललतायां च वि. कञ्चौ जलकरङ्कः सदान् नारिकेलफलेऽपि च, त्रि.

जलकूपी. जलकूपी कूपगर्त्ते पुष्करिण्याञ्च योषिति, मे. जलकूपी कूपगर्त्ते पुष्करिण्याञ्च कथ्यते, वि, जलकूप्यन्ध,गर्भके । सरस्याम्, हे.

जलगुल्म. जलगुल्मो जलावर्त्ते कच्छपे जलचत्वरे, वि, मे, हा. जलगुल्मो जलावर्त्तेऽम्बु,चत्वरे कमठे, हे.

जलज. जलजं कमले शङ्खे, मे, हे. जलजं शङ्खपद्मयोः, वि, त्रि.

जलतापक. जलतापक इल्लिशकाकाचीशफरयोश्च पुंसि स्यात्, मे. कथ्यते जलतापकः। काकाचीराजसफरमत्स्ययोः, वि.

जलद. जलदो मुस्तके मेघे, मे, हे. जलदो मुस्तकेऽम्बुदे, वि.

जलरुण्ड. जलरुण्डो जलावर्त्ते पयोरेणौ भुजङ्गमे, मे, वि. जलरुण्डः पयोरेणौ जलावर्त्ते भुजङ्गमे, हे.

जलविल्व. जलविल्वः कर्कटे स्यात् पञ्चाङ्गे जलचत्वरे, मे. जलविल्वस्तु पञ्चाङ्गे कर्कटे जलचत्वरे, वि. जलविल्वस्तु कर्कटे । जलचत्वरपञ्चाङ्गे, हे. जलविल्वः कर्कटके पञ्चाङ्गे जलवल्कले, हा.

जलशूचि. जलशूचिः कङ्के लोटिमत्स्यशृङ्गाटयोरपि । शिशुमारे च पुंलिङ्गः जलौकायान्तु योषिति, मे. जलशूचि र्जलौकसि । शृङ्गाटे शिशुमारे च कङ्के लोटिभषेऽपि च, वि. जलशूचिः शिशुमारे लोटिमत्स्ये जलौकसि । काकशृङ्गाटयोश्चापि, हे. जलशूचि र्जलौकाऽपि, हा.

जलाञ्चल. जलाञ्चलं स्रोतो वारिनिर्गमे शैवलेऽपि च, मे, वि. जलाञ्चलं तु शैवाले स्रोतश्च जलनिर्गमे, हे.

जलाटन. जलाटनो लोहपृष्ठे जलौकायां जलाटनी, मे, वि. जलाटनः कङ्कखगे जलाटनी जलौकसि, हे.

जलाशय. जलाशयो जलाधारे स्यादुशीरे नपुंसकम्, मे. जलाशयमुशीरे च जलाधारे जलाशयः, वि. जलाशयमुशीरे स्याज्जलाशयो

जलाश्रये, हे.

जलेन्द्र. जलेन्द्रः पुंसि वरुणे जम्भले च महोदधौ, मे. जलेन्द्रो वरुणेऽम्बुधौ। जम्भले च जलेन्द्रः स्यात्, वि. जलेन्द्रो जम्भलेऽम्भोधौ वरुणेऽपि च, हे.

जव. जवो वेगवति त्रिषु। पुंलिङ्गस्तु भवेद्वेगे चोड्रपुष्पे जवा स्मृता, मे. जवः स्याद् वेगवेगिनोः। जवोड्रपुष्पे, हे. जवो वेगिनि वेगे स्याद् ओड्रपुष्पे जवा मता, वि.

जवन. जवनन्तु स्याद्वेगेऽपि हये ना वेगिनि त्रिषु, मे. जवनो देशभेदे स्याद् वेगवेगाधिकाश्वयोः। जवन्योषधिभेदे स्याद् वाचयवद् वेगिनि स्मृतः, वि. जवनो वेगिवेगयोः। देश्यश्वे नीवृति जवन्यपथ्यामोषधीभिदि, हे. जवनो देशवेगिनोः, त्रि. v. यवन.

जसुरि. जसुरिः पावके पवौ, वि.

जह्नु. जह्नुः स्यात् पुंसि राजर्षिभेदे च मधुसूदने, मे.

जाङ्गल. जाङ्गली शूकशिम्ब्यां स्त्री जाङ्गलो ना कपिञ्जले, मे. जाङ्गली स्यूकशिम्ब्यां स्यात् जाङ्गलस्तु कपिञ्जले। जाङ्गलः स्यात् कपिञ्जले जाङ्गली तु स्यूकशिम्ब्याम्, हे.

जाङ्गुल. जाङ्गुली विषविद्यायाम् जाङ्गुलं जालिनीफले, मे, वि. जाङ्गुलं जालिनीफले। जाङ्गुली विषविद्यायाम्, हे.

जात. जातं व्यक्तौघजन्मसु। क्लीवं त्रिलिङ्गमुत्पन्ने, मे. जातं व्यक्तौघजन्मसु, त्रि. जातं जातप्रौघजन्मसु, वि. जातं जातप्रौघजनिषु, हे.

जाति. जातिः स्त्री गोत्रजन्मनोः। अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि। जातीफले च मालत्याम्, मे. जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः। जाति जातीफले धात्र्यां चुल्लीकम्पिल्लयोरपि, वि. जातिः सामान्यगोत्रयोः। मालत्यामामलक्यां च चुल्ल्यां कम्पिल्लजन्मनोः। जातीफले च्छन्दसि च, हे. जातिः सामान्यजन्मनोः, श्र. जातिश्छन्दसि मालत्यां चुल्ल्यां जातीफले कुले, त्रि. जातिः स्यात् सहजाख्यानं मालती

जातिरुच्यते । गोत्रादिकस्य जातिः स्यात् जातिं वेत्तीति कथ्यते, अने.

जातु. जातु शब्दे विगर्हणे । कदाचिदर्थेऽपि, मे.

जात्य. कुलीनश्रेष्ठयो र्जात्यम्, ह.

जानपद. V. जनपद.

जामातृ. जामाता दुहितुः पत्यौ सूर्यावर्त्ते धवे पुमान्, मे. जामाता वल्लभे सूर्यावर्त्तेऽपि दुहितुः पत्यौ, वि. जामाता दुहितुः पत्यौ। सूर्यावर्त्ते वल्लभे च, हे. सूर्यावर्त्तेऽपि जामाता, त्रि.

जामि. जामिः स्वसृकुलस्त्रियोः, वि, हे, श. जामिः कुलवालिकायां च, ह. V. यामि.

जायानुजीविन्. जायानुजीवी पुंसि स्यात् नटे च बकपक्षिणि, मे. जायानुजीवी तु नटे दुर्गताश्विनयो र्बके, वि. अथ जायानुजीविनः। बकाश्विननटदुःस्थाः, हे.

जार. जारो स्यादौषधीभेदे स्त्रियाश्चोपपतौ पुमान्, मे. जारो स्यादौषधीभेदे जारस्तूपपतावपि, वि. जारस्तूपपतौ जार्योषधी-भिदि, हे.

जाल. जालं गवाक्ष आनाये क्षारके दम्भदन्त्रयोः। जालो नीपद्रुमे जाली पाटलिकौषधौ स्त्रियाम्, मे. जालं समूह आनायगवाक्षक्षारकेष्वपि, अ. जालं दम्भेऽपि, त्रि. जालं कपटेऽप्युदाहृतम्, रु. जालं गवाक्ष आनाये कोरके दम्भदन्त्रयोः। जालो नीपद्रुमे जाली कोशातक्यामुदाहृता, वि. जालन्तु गवाक्षे क्षारके गणे। दम्भानाययो र्जालो नीपे जाली पटोलिका, हे.

जालक. जालकं कोरके दम्भे कुलायानाययोरपि। न पुंसि मोचकफले स्त्रियान्तु वसनान्तरे। गिरिसारजलौकायामपि स्याद् विधवास्त्रियाम्। भटानामश्मरचिताङ्गरक्षिणत्रां च जालिका। जालिको वाचत्रवञ्चामजालिजालोपजीविनोः, मे. जालिका जालिनीफले। भटानामश्मरचिताङ्गरक्षिणयाञ्च जालिका। गिरिसारे जलौकायामपि स्याद्वि-

श्वास्त्रियाम्। जालिकः पुनरुद्दिष्टो ग्रामकूटे च धीवरे, वि. जालकं कोरके प्रोक्तं कुलाये जालिनीफले। आनाये दम्भभेदे च वस्त्रभेदे च जालिका, वि. जालिका वस्त्रभित् कूटहृत्कैवर्त्तौ च जालकौ, त्रि.

जाल्म. जाल्मः स्यात् पामरे क्रूरे पुंस्यसमीक्ष्यकारिणि, मे. जाल्मः स्यात् पामरे क्रूरे जाल्मोऽसमीक्ष्यकारिणि, वि. जाल्मस्तु पामरे। असमीक्ष्यकारिणि च, हे.

जाहक. जाहको घोङ्कमार्जारखट्वाकारुशिण्डकासु च, मे, वि. घोङ्के कारुशिण्डकायाञ्च जाहकध्वनिरिष्यते, हा.

जिगत्नु. जिगत्नुः पुंसि जन्तौ वैश्वानरेऽपि च, मे. जिगत्नुरग्नौ जन्तौ च, वि.

जिगीषा. जिगीषा जेतुमिच्छायां व्यवसायप्रकर्षयोः, मे, वि. जिगीषा तु जयस्पृहा। व्यवसायः प्रकर्षश्च, हे.

जिन. जिनोऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु, मे. जिनः स्यादतिवृद्धे च बुद्धे चार्हति जित्वरे, वि. जिनोऽर्हद्बुद्धविष्णुषु, हे. बुद्धे जिनो जित्वरे च, त्रि. वीतरागो जिनः प्रोक्तो जिनो नारायणः स्मृतः। कन्दर्पोऽपि जिनश्चैव जिनः सामान्यकेवली, अने.

जिष्णु. जिष्णुर्ना वासवेऽर्जुने। जित्वरे वाच्यवत्, मे. जिष्णुः शक्रे धनञ्जये। जित्वरे च, वि. जिष्णुः शक्रेऽर्जुने विष्णौ जित्वरेऽर्के वसुष्वपि, हे. जेतरीन्द्रेऽर्जुने जिष्णुः, त्रि.

जिह्म. जिह्मस्तु कुटिले मन्दे क्लीवं तगरपादपे, मे. जिह्मस्तु कुटिले मन्दे जिह्मस्तगरपादपे, वि. जिह्मः कुटिले मन्दे च जिह्मं तगरपादपे, हे. जिह्मस्तु कुटिलेऽलसे, अ. जिह्मः स्यात् कुटिले मन्दे, त्रि.

जिह्मग. जिह्मगोऽहौ च मन्दगे, मे. जिह्मगो मन्दगे सर्पे, हे, वि.

जिह्वा. जिह्वा तु वाचि ज्वालारसज्ञयोः, हे.

जिह्वाप. जिह्वापः शुनि मार्जारे, मे, त्रि. जिह्वापः शुनि मार्जारे व्याघ्रचित्रकयोरपि, वि. जिह्वापस्तु शुनि व्याघ्रे द्वीपिविड़ालयोः, हे. जिह्वापो दृषदंशे स्यादिन्द्रमस्तकामुके, ह्रा.

जीमूत. जीमूतोऽद्रौ भृतिकरे देवताड़े पयोधरे, मे. जीमूतः स्याद्भृतिकरे शक्रेऽद्रौ घोषके घने, वि. जीमूतो वासवेऽम्बुदे। घोषकेऽद्रौ भृतिकरे, हे. जीमूतौ मेघपर्वतौ, धने. जीमूतं पर्वतेऽपि कथयन्ति, ह.

जीर. जीरस्तु जरणे खड्गे, मे. जीरः खड्गे वणिग्द्रव्ये, वि. जीरस्त्वजाजखां खड्गे च, हे.

जीर्ण. जीर्णं परिपक्वपुराणयोः, मे. जीर्णं पक्के पुराणे च, वि.

जीव. जीवः प्राणिनि हस्तौ च ह्वभेदे वृहस्पतौ। जीवा जीवन्तिकामौर्वीवचाशिञ्जितभूमिषु। न स्त्री तु जीविते, मे. जीवः स्यात् त्रिदशाचार्ये द्रुमभेदे शरीरिणि। जीवितेऽपि च जीवा तु वचायां धनुषो गुणे। शिञ्जिते क्षितिजीवन्त्यो हस्तौ, हे. जीवोऽस्त्री जीविते पुंसि गुरुजन्त्वोः स्त्रियां गुणे, त्रि. जीवो द्दक्षभेदे स्यात् जीवः प्राणिनि गीष्पतौ। जीवा जीवन्तिकाभूम्यो मौर्वीशिञ्जितवृत्तिषु। वचायामपि जीवा स्यात् जीवं जीवा च जीविते, वि.

जीवक. जीवकः प्राणके पीतशालक्षपणयोरपि। कूर्चशीर्षेऽपि पुंसि स्यादाजीवे जीविका मता। त्रिषु सेविनि वृद्ध्याजीवविनोराहितुण्डिके, मे. जीवकः पीतशाले स्यात् क्षपणे वृद्धिजीविनि। सेविनि प्राणकेऽप्याहितुण्डिके पादपान्तरे। आजीवे जीविकामाहुर्जीवन्त्यामपि कुत्रचित्, वि. जीवको वृद्धिजीविनि। क्षपणे प्राणके पीतसालसेवकयोर्द्रुमे। व्यालग्राहे जीविका तु जीवन्त्यां वर्त्तनेऽपि च, हे.

जीवञ्जीव. जीवञ्जीवश्चकोरे स्याद् द्रुमभेदेऽपि पुंस्ययम्, मे. जीवञ्जीवश्चकोरे स्याद्द्रुमपक्षिविशेषयोः, वि. जीवञ्जीवः खगान्तरे। द्रुमभेदे चकोरे च, हे.

जीवद. जीवदो वैद्यविद्विषोः, मे, वि. जीवदो रिपुवैद्ययोः। ग्रन्थिपर्णे, हे.

जीवन. जीवनं वर्त्तने नीरप्राणधारणयोरपि। जीवनी जीवना चापि जीवन्तीभेदयोः क्रमात्, मे. जीवनं वर्त्तने नीरे पुत्रजीवे तु जीवनः। जीवनी जीवना चेति जीवन्तीभेदयोः क्रमात्, वि. जीवनस्तु पुत्रजीवे जीवनं वृत्तिवारिणोः। स्त्र्याञ्जीवना तु मेदायां जीवनी तु मधुस्रवा, हे. जीवनं वर्त्तनाम्भसोः, त्रि.

जीवन्तिका. जीवन्तिका गुडूच्याञ्च जीवाख्यशाकवन्द्योः, मे. जीवन्तिकापि जीवाख्यशाकवन्दागुडूचिषु. वि.

जीवन्ती. जीवन्ती जीवनीशस्यो गुडूचीवन्द्योरपि, मे. जीवन्ती जीवनीशस्यो गुडूचिवन्द्योरपि, वि. जीवन्ती शमिवन्द्योः। जीवन्त्यां च गुडूच्यां च, हे.

जीवपुष्प. जीवपुष्पन्तु दमनके फणिज्जके, हे.

जीवातु. जीवातुरस्त्रियां भक्ते जीविते जीवनौषधौ, मे. जीवातु जीविते भक्ते जीवातु जीवनौषधे, वि. जीवातु जीवनौषधे। जीवितेऽपि, हे.

जीवितेश. जीवितेशो यमे पुंसि त्रिषु स्त्र्यात् जीवितेश्वरे, मे. जीवितेशो यमे कान्ते जीवातौ जीविताधिपे, वि. जीवितेशः प्रिये यमे। जीवितस्वामिजीवात्वोः, हे. जीवितेशो यमे नाथे, त्रि.

जुष्ट. जुष्टन्तु क्लीवमुच्छिष्टे सेविते वाच्यलिङ्गकम्, मे.

जुहुराण. जुहुराणोऽपि चाध्वर्य्यावपि स्त्र्यात् जातवेदसि, मे. जुहुराणोऽनलेऽध्वर्य्यौ, वि. जुहुराणोऽध्वर्य्युवक्रयोः, हे.

जू. जूस्त्वरागमने प्रोक्ता सामान्यगमने स्त्रियाम्। जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्, मे. जूराकाशे सरस्वत्यां पिशाच्यां जवनेऽपि च, वि, हे.

जृम्भा. जृम्भा विकाशजृम्भणयोस्त्रिषु, मे. जृम्भा जृम्भे विकाशे

र्गतौ नर्मणि विद्रवे, वि. द्रवो विद्रवनर्मणोः। प्रद्रावे रसगतयोश्च, हे.

द्रवन्ती. स्रवन्ती च द्रवन्त्यपि। नद्यामोषधिभेदे च, हे. v. स्रवन्ती.

द्रविण. द्रविणं न द्वयो र्वित्ते काञ्चने च पराक्रमे, मे. द्रविणं काञ्चने वित्ते द्रविणञ्च पराक्रमे, वि. द्रविणन्तु बलं धनम्, अ. v. द्रविण.

द्रव्य. द्रव्यं स्यात् पित्तले वित्ते पृथ्व्यादौ च विलेपने। क्लीवे च भेषजे भवेद्र द्रुविकारे च वाच्यवत्, मे. द्रव्यं स्याद् द्रविणे भवेद्र पृथिव्यादौ च पित्तले। भेषजे चापि विनये जतुद्रुमविकारयोः, वि. द्रव्यं भवेद्र धने क्ष्मादौ जतुद्रुमविकारयोः। विनये भेषजे वीर्य्यां, हे. द्रव्यं भवेद्र गुणाश्रये, अ. भेषजे द्रुविकारे च द्रव्यं भवेद्र च पित्तले, त्रि.

द्रावक. द्रावको ग्रावभेदे स्याद् विदग्धे मोषकेऽपि च, मे. द्रावकस्तु शिलाभेदे स्याद् घोषकविदग्धयोः, हे. द्रावकस्तु शिलाभेदे विदग्धे घोषकेऽपि च, वि.

द्राविड़. द्राविड़ो देशभिज्जाते सङ्ख्याभिद्वेधसुख्ययोः, मे. द्राविड़ः स्याज्जानपदे वेधसुख्यकसङ्ख्ययोः, वि.

द्रुघण. द्रुघणो मुद्गरेऽपि स्याद् द्रुहिणे च परश्वधे, मे, वि. द्रुघणः पर्शुवेधसोः। मुद्गरेऽपि, हे.

द्रुण. द्रुणं चापेऽलिनि द्रुणः। द्रुणखड्गद्रोणीकच्छप्योः, मे. द्रुणं चापे च खड्गे च द्रुणो वृश्चिकभृङ्गयोः। द्रुणी कच्छपिकायाञ्च जलद्रोण्यामुदाहृता, वि. द्रुणः स्याद् वृश्चिके भृङ्गे द्रुणं चापकृपाणयोः। द्रुणी कूर्म्यां जलद्रोण्याम्, हे. द्रुणोऽलिः कच्छपी द्रुणी, त्रि.

द्रुत. द्रुतं त्रिषु। शीघ्रे विलीने विद्राणे, मे. द्रुतं शीघ्रविलीनयोः, हे, त्रि. द्रुतं शीघ्रे विलीने च विद्राणे चाभिधेयवत्, वि.

द्रुम. द्रुमो महीरुहे पारिजाते किम्पुरुषेश्वरे, मे. द्रुमस्तरौ पारिजाते द्रुमः किम्पुरुषेश्वरे, वि. द्रुमस्तु पादपे पारिजाते किम्पुरुषेश्वरे, हे. द्रुमो यक्षेश्वरे वृक्षे, त्रि. द्रुमो वृक्षेषु शैलेषु, अने.

द्रू. द्रूः स्वर्णे कामरूपिणि, वि. द्रूः कामरूपिणि स्वर्णे, हे.

द्रोण. द्रोणोऽस्त्रियामाढ़के स्यादाढ़कानां चतुष्टये। पुमान् कपोपतौ दग्धकाके स्त्री नीवृदन्तरे। तथा काष्ठाम्बुवाहिन्यां गवाद-न्यामपीष्यते, मे. द्रोणः कपोपतौ कृष्णकाके स्यादाढ़केऽपि च। आढ़-कानां चतुष्के च द्रोणी स्यान्नीवृदन्तरे। द्रोणी काष्ठाम्बुवाहिन्यां गवां घासभुजि स्थितौ, धि. द्रोणः पार्थगुरौ काके माने द्रोणी तु नीवृति। नौभेदे शैलभेदे च, हे. अथ द्रोणः काकेऽपि, अ. काष्ठा गावेऽम्बुवाहिन्यां शैलसन्धौ च योषिति। द्रोणो न स्त्री मानभेदे द्रोणः काकः कपोपतौ, त्रि. द्रोणः स्यात् कौरवाचार्य्यो द्रोणः काक इतो-रितः। द्रोणो गिरिविशेषश्च द्रोणः स्याच्चतुराढ़कः, अने.

द्रोहाट. द्रोहाटः कथितो गाथाप्रभेदे मृगलुब्धके। वैड़ालव्रतिके च, मे, वि. द्रोहाटो मृगलुब्धके। चतुष्पदीप्रभेदे च विड़ालव्रतिकेऽपि च, हे.

द्वन्द्व. द्वन्द्वं रहस्येऽत्र कलहे तथा मिथुनयुग्मयोः, मे. द्वन्द्वो रहस्येऽत्र कलहे द्वन्द्वं मिथुनयुग्मयोः, वि. द्वन्द्वः से द्वन्द्वमाहवे। रहस्येऽत्र मिथुने युग्मे, हे. द्वन्द्वं कलहयुग्मयोः, अ.

द्वापर. द्वापरः संशये युगे, मे, वि, हे. द्वापरौ युगसंशयौ, अ. सन्देहेऽपि द्वापरमाहुः, ह.

द्वार. द्वारं निर्गमनेऽपि स्याद् अभ्युपाये, मे. द्वारं पुन र्निर्ग-मनेऽभ्युपाये, वि. द्वारं निर्गमेऽभ्युपाये, हे. उपाये निर्गमे द्वारम्, त्रि.

द्विक. द्विकः स्यात् काककोकयोः, मे, हे. द्विकः काके च कोके च, वि. द्विकौ काकचक्रवाकौ, त्रि.

द्विज. द्विजः स्याद् ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना। द्विजा भार्गर्या हरेणौ च, मे. द्विजो विप्रेऽण्डजे दन्ते भाण्डारेणुकयो र्द्विजा, वि. द्विजो विप्रक्षत्रिययो र्वैश्ये दन्ते विहङ्गमे। द्विजा भार्गीरेणुकयोः, हे. दन्तविप्राण्डजा द्विजाः, अ. दन्तविप्रौ तथा द्विज, अने.

द्विजन्मन्. द्विजन्मा दशने विप्रे, मे, वि. द्विजन्मानौ रदविप्रौ, हे. द्विजन्मा दन्तविप्रयोः, त्रि.

द्विजाति. द्विजाति र्विप्राण्डजयोश्च पुंलिङ्गः, मे. द्विजातिरण्डजे विप्रे, वि. द्विजाति र्ब्राह्मणेऽण्डजे, हे.

द्विजराज. द्विजराजस्तु चन्द्रेऽनन्ते गरुत्मति, मे. द्विजराजः शशधरे सुपर्णेऽनन्तभोगिनि, वि. द्विजराजस्तु शशाङ्के गरुड़ेऽपि च, हे. हंसेऽग्नौ गरुड़े चन्द्रे द्विजराज इति ध्वनिः, अने.

द्विजिह्व. (ह्‌व) द्विजिह्वस्तु खले सर्पे, मे. द्विजिह्वो भुजगे खले, वि. द्विजिह्वः खलसर्पयोः, हे. द्विजिह्वौ सर्पसूचकौ, श्र. द्विजिह्वः सूचको ज्ञेयो द्विजिह्वस्तु भुजङ्गमः, अने. दृष्टिविषे सूचके च द्विजिह्वः परिकीर्त्तितः, त्रा.

द्वितीय. द्वितीया तिथिभित्पत्न्योः पूरणे त्वभये त्रिषु, मे. द्वितीया तिथिभित्पत्न्योः पूरणत्रामपि च द्वयोः, वि. द्वितीया तिथिगेहिन्यो-र्द्वितीयः पूरणे द्वये, हे. द्वितीया तिथिभित्पत्न्योः, त्रि. सपत्न्यामपि द्वितीया, इ.

द्वीपवत्. द्वीपवान् सिन्धुनदयो र्द्वीपवत्यापगाभुवोः, मे, वि.

द्वैमातुर. द्वैमातुरो जरासन्धवारणाननयोः पुमान्, मे. द्वैमातुरो जरासन्धवारणाननयो र्मतः, वि.

ध. धो ना धर्मे कुवेरे च क्लीवं तु वसुनि स्मृतम्। धो धा च ब्रह्मणि ख्यातो धा तु स्याद् धारकेऽपि च, मे. मौनेशः सात्वतः प्रीति र्वामपादाङ्गुलीगतः। धनेशो धरणीशश्च धकारो दान्तिमः स्मृतः, मा.

धट. धटो दिव्यतुलायां स्याद् धटी चीरे च वाससः, मे. धटी खण्डे च वाससः। परीक्षार्थतुलायां च धटः सूरिभिरिष्यते, वि.

धन. धनं तु गोधने वित्ते, मे. धनं गोधनवित्तयोः, वि. धनं वित्ते गोधने च स्यात्, हे.

धनञ्जय. धनञ्जयोऽर्जुने वह्निनागदिग्देहमारुते, मे. धनञ्जयोऽर्जुने वह्नौ ककुभे देहमारुते। नागान्तरे च, वि. धनञ्जयो नागभेककुभे देहमारुते। पार्थेऽग्नौ, हे. पार्थेऽग्नौ च धनञ्जयः, त्रि.

धनद. धनदस्तु कुवेरे स्यात् पुंलिङ्गो दातरि त्रिषु, मे. धनदो दातरि श्रीदे, वि. धनदो दातृगुह्यकौ, हे.

धनिक. धनिका साधुनार्यां ना धन्याके त्रिषु साधुधनिनोश्च, मे. धनिकः साधुधन्याकधवेषु धनिका स्त्रियाम्, वि. धनिको धान्यके धवे। धनाढ्ये च धनिका वध्वाम्, हे.

धनु. धनुः पुमान् पियालद्रौ राशिभेदे शरासने, मे. धनुसंज्ञा पियालद्रौ राशिभेदे शरासने, वि. धनुशब्दः पियालद्रौ राशिभेदे धनुष्यपि, हे.

धनुस्. धनुः पियाले ना न स्त्री राशिभेदे शरासने। धनुर्धरे त्रिषु, मे. धनुः पियालद्रुमराशिभेदयोः शरासने चापि धनुर्धनुर्धरे, वि. धनुः शरासने राशौ पियालद्रौ धनुर्धरे, हे.

धन्य. धन्या धात्र्यामलक्योः स्याद् धन्यं पुण्यवति त्रिषु, मे. धन्यो धनवति स्मृतः। धन्या धान्यामलक्योश्च, वि. धन्यः पुण्ययुते धन्यामलक्यामुपमातरि, हे.

धन्वन्. धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च, मे. धन्वा जाङ्गलदेशे स्याद् धन्व चापे स्थलेऽपि च, वि. धन्व स्थलचापयोः, हे. धन्वा मरौ धन्व चापे, त्रि.

धन्विन्. धन्वी धनुर्धरेऽपि स्यादर्जुने ककुभद्रुमे, मे. धन्वी धनुर्धरे पार्थे विदग्धे ककुभद्रुमे, वि. धन्वी पार्थे च्छेके ककुभचापिनोः, हे.

धमन. धमनो नाऽनले भस्त्राध्मापकक्रूरयोस्त्रिषु। धमनी तु शिराहट्टविलासिन्योश्च योषिति, मे. धमनोऽप्यनले भस्त्राध्मापकक्रूरयोः स्मृता। धमनी तु हरिद्रायां कन्धराशिरयोरपि, वि. धमनोऽनले। क्रूरे वस्त्राध्मापके च धमनी कन्धरा शिरा। हरिद्रा च, हे.

धर. धरो गिरौ। कार्पासतूलके कूर्मराजे वस्वन्तरेऽपि च। धरा विश्वम्भरायाञ्च स्त्री गर्भाशयमेदसोः, मे. धरस्तु शैले कार्पासतूलके कमठाधिपे। धरा मेदसि भूम्यां च स्त्रीणां गर्भाशयेऽपि च, वि. धरः कूर्माधिपे गिरौ। कार्पासतूलेऽथ धरा मेदोभूमिजरायुषु, हे. धरा पृथ्वी धरा धारा धरः शैलो धरा धृतिः, अने. (धरो धूर्ते च पर्वते, अने.) धरा पृथ्वी धरो गिरिः, त्रि.

धरण. धरणं मानभेदेऽपि धारणे धरणी भुवि, मे, वि. धरणं धारणे मानविशेषे धरणी भुवि, हे.

धराधर. धराधरो हरौ शैले, मे. धराधरः क्ष्माभृति चक्रपाणौ, वि. धराधरः। कृष्णेऽद्रौ च, हे. हरिशैलौ धराधरौ, त्रि.

धरुण. धरुणः सम्मते नीरे स्वर्लोके परमेष्ठिनि, मे, वि.

धर्म. धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ। अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे, मे. धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ। उपमायामहिंसायां चापे चोपनिगद्यते, वि. धर्मो यमोपमापुण्यस्वभावाचारधन्वसु। सत्सङ्गेऽर्हत्यहिंसादौ न्यायोपनिषदोरपि। धर्मं दानादिके, हे. धर्मोऽहिंसोपमायोगोपनिषत्सु धनुष्यपि, त्रि.

धर्मण. धर्मणस्तु पुमान् वृक्षभेदसर्पप्रभेदयोः, मे. धर्मणोऽहिद्रुभेदयोः, वि.

धर्मराज. धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्, मे. धर्मराजो यमे बुद्धे धर्मराजो युधिष्ठिरे, वि. धर्मराजस्तु सुगते श्राद्धदेवे युधिष्ठिरे, हे. धर्मराजौ जिनयमौ, अ.

धर्षण. धर्षणं स्यात् परिभवे रतेऽसत्यां तु धर्षणी, मे, वि. धर्षणं रतेऽभिभवे धर्षणी त्वभिसारिका, हे. असतौ स्याद् धर्षणी च धर्षणा निकृतौ रते, त्रि.

धव. धवः पुमान् नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च, मे. धवः पत्यौ नरे धूर्ते वृक्षभेदेऽपि कीर्तितः, वि. धवो धूर्ते नरे पत्यौ द्रुभेदे, हे. पति-

शाखिनरा धवाः, श. धवो धूर्त्तेऽपि, त्रि. धवः पति र्धवो मर्त्यो वृक्षजाति-र्धवो मतः, अने.

धवल. धवला गवि। वृषश्रेष्ठे पुमान् वाच्यलिङ्गः शुक्ले च सुन्दरे, मे. धवलः सुन्दरे सिते। महोक्षे चाथ धवली सौरभेयग्राम्युदीरिता, वि. धवलो महोक्षे सुन्दरे सिते। धवली गौः, हे. धवला गवि ना श्रेष्ठे शुक्लसुन्दरयोस्त्रिषु, त्रि.

धातु. धातु र्नेन्द्रियेषु च। शब्दयोनिमहाभूततद्गुणेषु रसादिषु। मनःशिलादौ श्लेष्मादौ विशेषाद् गैरिकेऽस्थ्नि च, मे. धातु-रसादौ श्लेष्मादौ शब्दिशावविकारयोः। महाभूतेषु लोकेषु शब्दादाविन्द्रियेऽस्थनि, हे. धातुः स्यादश्मविकृतौ विषयेष्विन्द्रियेषु च। भुवादिरसरक्तादिश्लेष्मादिवसुधादिषु। वर्तते धातुशब्दोऽयं विशेषादस्थि गैरिके, वि. श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः। इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः, श. वातादिप्रकृति र्धातु र्धातु र्देहरसादिकः। क्रियाभावः स्मृतो धातु र्धातुः शैलापलोद्भवः, अने. पृथिव्यादिषु भूतेषु शरीरेषु रसादिषु। लोहेषु च स्मृतो धातुः स्वभावे गैरिकादिषु, ह. राशौ च धातुः, त्रि.

धातृ. धाता हिरण्यगर्भे ना पालके त्रिषु, मे. धात्री जनन्यामलकीवसुमत्युपमातृषु, मे. धाता हिरण्यगर्भ स्यात् पालके त्वभिधेयवत्, वि. धात्री जनन्यामलकीवसुमत्युपमातृषु, वि. धात्री भुव्युपमातरि। आमलक्यां जनन्यां च, हे. धाता वेधसि पालके, हे. धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि, श. धात्री भुव्यामलक्यां च, त्रि. धातकी प्रोच्यते धात्री धात्री चामलकी तथा। धात्री वसुन्धरा ज्ञेया धात्री सद्यात् स्तनदायिनी, अने.

धाना. धाना भृष्टयवेऽपि च। धान्याकेऽभिनवोद्भिन्ने, मे. धाना भृष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि, वि. धाना भृष्टयवेऽङ्कुरे धान्याके चूर्णसक्तुषु, हे.

धान्य. धान्यं व्रीहिषु धान्याके, मे, वि. धान्यं तु व्रीहौ धान्याके, हे.

धामन्. धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः, मे, वि. धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः, हे. गृहदेहत्विट्प्रभावा धामानि, अ. प्रभावे तेजसि स्थाने धामशब्दो निगद्यते, अने.

धामार्गव. धामार्गवस्तु पुंसि स्याद् अपामार्गे च घोषके, मे. धामार्गवस्त्वपामार्गे देवदालग्रामपि स्मृतः, वि. धामार्गवस्तु घोषके। अपामार्गेऽपि, हे.

धार. धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके। घटादिच्छिद्र-सन्तत्योः प्रपाते स्याद् द्रवस्य च। खड्गादे निशितमुखे धारो ग्रावान्तरेऽप्यृणे, मे. धारा सैन्याग्रिमस्कन्धसन्तत्योः पतनान्तरे। द्रवद्रव्यप्रपातेऽपि तुरङ्गगतिपञ्चके। खड्गादीनां च निशितमुखे धाराऽपि कीर्त्यते। धारः क्वचिद् घनासारवर्षणे स्यादृणेऽपि च, वि. धारो जलधरासारवर्षणे स्यादृणेऽपि च। धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजिनां गतौ। जलादिपाते सन्तत्याम्, हे. धारा हरिद्राश्वगतिनिशास्वृत्ततिराजिषु, त्रि.

धारण. धारणी नाड़िकायां स्याद् बुद्धोक्तमन्त्रभिद्यपि। धारणाङ्गे च योगस्य न पुंसि स्याद् विधारणे, मे. धारणी नाड़िकायां स्याद् बुद्धोक्तमन्त्रभिद्यपि, वि. बुद्धमन्त्रे नाड़िकायां धारणी, त्रि.

धाराङ्कुर. धाराङ्कुरस्तु नासीरे शीकरेऽपि घनोपले, मे, वि. धाराङ्कुरः शीकरे स्यान् नासीरे जलदोपले, हे. धाराङ्कुरो वायुफले नासीरे शीकरेऽपि च, श.

धाराङ्ग. धाराङ्गोऽसौ च तीर्थे च, मे. धाराङ्गः खड्गतीर्थयोः, वि. धाराङ्गस्तीर्थखड्गयोः, हे.

धाराट. धाराटश्चातकाश्वयोः, मे, वि. धाराटश्चातकेऽश्वे च, हे. धाराटौ चातकहयौ, त्रि. धाराटश्चातके वाहे, श.

धाराधर. धाराधरोऽसिमेघयोः, मे. धाराधरस्तोयधरे कृपाणे, वि. धाराधरस्तु पयोदकरवालयोः, हे. धाराधरौ खड्गमेघौ, त्रि.

धार्तराष्ट्र. धार्तराष्ट्रोऽसितासन्नाङ्घ्रिहंसे कौरवसर्पयोः, मे. धार्तराष्ट्रोऽसितासन्नाङ्घ्रिहंसकौरवभोगिषु, वि. धार्तराष्ट्रः कौरवेऽहौ कृष्णास्याङ्घ्रिसितच्छदे, हे.

धावन. धावनं गमने शुद्धौ पृश्निपर्ण्यां तु योषिति, मे. धावनं प्रगमे शुद्धौ पृश्निपर्ण्यां तु धावनी, वि. धावनं तु गतौ शौचे, हे. धावनं गतिशौचयोः, त्रि. धावनं शोधनं प्रोक्तं धावनं शीघ्रवर्तनम्, अने.

धिक्. धिग् भर्त्सने च निन्दायाम्, मे. धिग् भर्त्सननिन्दयोः, वि, हे. धिङ् निर्भर्त्सननिन्दयोः, श्रा.

धिषण. धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति, मे. धिषणस्त्रिदशाचार्ये धिषणा धियि सम्मता, वि. धिषणस्त्रिदशाचार्यो धिषणा तु मनीषिका, हे.

धिष्ण्य. धिष्ण्यं स्थानाग्निसद्मसु। शक्राहस्वेऽपि, मे. धिष्ण्यं सद्मनि नक्षत्रे स्थाने शक्तौ च पावके, वि. धिष्ण्यं स्थानोडुवेश्मसु। बले धिष्ण्योऽग्नौ, हे. धिष्ण्यं स्थाने गृहे भेऽग्नौ, श्रा. तारास्वग्नौ गृहे स्थाने धिष्ण्यमाहुर्मनीषिणः, अने.

धी. धी र्ज्ञाने ज्ञानभेदेऽपि, मे.

धीदा. धीदा पुत्रीमनीषयोः, मे. धीदा कन्यामनीषयोः, वि, हे.

धीमत्. धीमान् पण्डिते च बृहस्पतौ, मे. धीमान् वाक्पतौ धीरे, वि.

धीर. धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे। स्त्रियां श्रवणतुल्यायाम्, मे. धीरो ज्ञे धैर्यसंयुते। स्वैरे धीरं तु घुसृणे, हे. धीरः पण्डितमन्दयोः। धीरं च कुङ्कुमम्, त्रि. धीरौ सात्त्विकधीमन्तौ, अने.

धीवर. धीवरो लुब्धके बुधे, वि.

धुत. अथो धुतम्। त्यक्ते विधूते, मे. धुतं त्यक्ते विधूते च, वि. धुतं तत्यक्ते कम्पिते च, हे.

धुन्धुमार. धुन्धुमारः शक्रगोपे गृहधूमे पटालिके, मे, वि. धुन्धुमारः शक्रगोपे गृहधूमे गृहालिके, त्रा. धुन्धुमारो गृहधूमे नृपभेदेन्द्रगोपयोः। पटालिके, हे.

धुर. धूर्यानमुखभारयोः, हे.

धुरन्धर. धुरन्धरो धवद्रौ ना वाच्यलिङ्गस्तु धूर्वहे, मे. धुरन्धरो धवतरौ धूर्वहेऽपि धुरन्धरः, वि. धुरन्धरो धुर्ये धवद्रुमे, हे.

धू. धूः स्मृता धुनने स्त्रियाम्, मे.

धूत. धूतं तु कम्पिते भर्त्सिते त्रिषु, मे. धूतौ कम्पितभर्त्सितौ, हे. धूतं कम्पितभर्त्सिते, वि.

धूमकेतन. स्याद् धूमकेतनः पुंसि केतुग्रहहुताशयोः, मे. धूमकेतनमिच्छन्ति हुताशग्रहभेदयोः, वि. धूमकेतनोऽनले। ग्रहभेदे च, हे.

धूमकेतु. सप्राद् धूमकेतुरुत्पातभेदे वैश्वानरे पुमान्, मे. धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः, वि. धूमकेतू वह्न्युत्पातौ, हे. अग्न्युत्पातौ धूमकेतू, श्र.

धूर्त. धूर्तं तु खण्डलवणे धुस्तूरे ना विटे त्रिषु, मे. धूर्तः सप्रात् खण्डलवणे खलधुस्तूरयोरपि, वि. धूर्तं तु खण्डलवणे धूर्तौ धत्तूरमायिनोः, हे.

धूलि. धूलिः संख्यान्तरे रेणौ, वि.

धूलिकदम्ब. धूलिकदम्बो नीपे सप्रात् तिनिशे वरुणद्रुमे, मे, वि. धूलिकदम्बस्तिनिशे नीपे वरुणपादपे, हे.

धूसर. धूसरो किन्नरीभेदे ना खरे त्रिषु पाण्डुरे, मे. धूसरः पाण्डुरे खरे, वि. धूसरस्तु रासभे स्तोकपाण्डुरे, हे.

धृतराष्ट्र. धृतराष्ट्रः सुराज्ञि सप्रान् नागक्षत्रियभेदयोः। धृतराष्ट्री हंसपद्याम्, मे. धृतराष्ट्रः सुराज्ञि सप्रात् पक्षिक्षत्रियभेदयोः। धृतराष्ट्री हंसपद्याम्, वि. धृतराष्ट्रः खगे सर्पे सुराज्ञि क्षत्रियान्तरे। धृतराष्ट्री हंसपद्याम्, हे.

खट्वाङ्गे मेढ्रचिह्नयोः, मे. ध्वजं चिह्ने पताकायां ध्वजः शौण्डिकशेफसोः। खट्वाङ्गे च, वि. ध्वजः पूर्वदिशो गृहे। शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च, हे. चिह्नशेफपताकासु खट्वाङ्गेऽपि ध्वजोऽस्त्रियाम्, त्रि.

ध्वजिन्. ध्वजी तु पृथिवीधरे। रथब्राह्मणयोश्चापि भुजङ्गमतुरङ्गयोः, मे. ध्वजी शैले रथे विप्रे भुजङ्गमतुरङ्गयोः, वि.

ध्वनिनाला. ध्वनिनाला तु वीणायां वेणुकाहलयोरपि, मे. ध्वनिनाला स्मृता वेणौ काहलावीणयोरपि, वि. ध्वनिनाला तु वल्लक्यां वेणुकाहलयोरपि, हे. काहलावेणुवीणासु ध्वनिनालाध्वनिं विदुः, हा.

ध्वाङ्क्ष. ध्वाङ्क्षो मत्स्याद्खगे काके तर्कोटे भिक्षुकेऽपि च। ध्वाङ्क्षी कक्कोलिकायाम्, मे. ध्वाङ्क्षस्तु काकबकयोस्तर्कके भिक्षुके गृहे। ध्वाङ्क्षी कक्कोलिकायां स्यात्, वि. ध्वाङ्क्षः काके बकेऽर्थिनि। गृहे ध्वाङ्क्षी तु काकोल्याम्, हे. काकमत्स्याद्खगौ ध्वाङ्क्षौ, अ. ध्वाङ्क्षः काको बको ध्वाङ्क्षः, अने. बके ध्वाङ्क्षः, ह.

न. नः पुमान् सुगते बन्धे द्विरण्डे प्रस्तुतेऽपि च, मे. न स्यान्निषेधोपमयोः, मे. शौरी मेषे स्वरो दीर्घो वामपादाङ्गुलीगतः। नटो नटी नो नादी च नकारश्चानुनासिकः, मा. नेता नश्च समाख्यातस्तरणी नः प्रकीर्त्तितः। नकारः सौगते वृद्धौ स्तुतौ वृन्दे प्रकीर्त्तितः, ए. V. नञ्.

नकिर्. नकि र्निषेधोपमयोः, मे.

नकुल. नकुलौ कुक्कुटीमांस्योः पशुपाण्डवयोः पुमान्, मे. नकुलो कुक्कुटीमांस्यो र्नकुलः पाण्डवे पशौ, वि. नकुलस्तु पाण्डवप्राणिभेदयोः। नकुली कुक्कुटीमांस्योः, हे.

नक्षत्रनेमि. नक्षत्रनेमिरुक्ता रेवत्यां ना ध्रुवे चन्द्रे, मे. नक्षत्रनेमिः शीतांशौ रेवत्यां च ध्रुवे क्वचित्, वि. नक्षत्रनेमिः शीतांशुरेवत्योत्तानपादिषु, हे.

नख. नखो स्त्रीक्लीवयोः शुक्तौ नखरे पुंनपुंसकम्, मे. नखः

नद्ध. नद्धो बद्धे तयोहत्ते, मे. नद्धमुद्दत्तवद्धयोः, वि.

ननु. ननुशब्दो विनिग्रहे। ननु प्रश्ने प्रस्तावधिकारे च सम्भ्रमे। आमन्त्रणेऽप्यनुनये प्रश्नानुज्ञावधारणे, मे. ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे। आमन्त्रणे चापि ननु, वि. नन्वाक्षेपे परिप्रश्ने प्रत्युक्तावधारणे। वाक्यारम्भेऽप्यनुनयामन्त्रणानुज्ञयोरपि, हे. ननु प्रश्नेऽवधारणे, ह. प्रश्नावधारणाऽनुज्ञानुनयामन्त्रणे ननु, अ.

ननुच. ननुच प्रश्नदुष्टोक्त्योः, मे, वि. ननुच प्रश्ने दुष्टोक्तौ, हे.

नन्द. नन्दा स्यादलिञ्जरे। गौर्य्यां तिथिविशेषे स्त्री निधिराणभिदोः पुमान्, मे. नन्दा मणिकसम्पदोः, वि. नन्दा सम्पदलिञ्जरे। तिथिभेदे च, हे.

नन्दक. नन्दको हरिखड्गे च हर्षके कुलपालके, मे. नन्दको हरिखड्गे स्यात्हर्षके कुलपालके, वि. नन्दकः कुलपालके। हर्षके हरिखड्गे च, हे.

नन्दन. नन्दनं वासवोद्याने नन्दनो हर्षके सुते, मे, वि. नन्दनम्। इन्द्रोद्याने नन्दनस्तु तनये हर्षकारिणि, हे. अथ नन्दनम्। देवोद्याने सुते पुंसि, त्रि. नन्दनः सज्जनः पुत्रो नन्दनं स्वर्गवाटिका, अने.

नन्दि. नन्दिर्दूर्तताङ्ग आनन्दे स्त्री नन्दिकेश्वरे पुमान्, मे. नन्दिरानन्दने दूरते प्रतीहारे हरस्य च, वि. नन्दिस्तु प्रतीहारे पिनाकिनः। आनन्दने च दूरते च, हे.

नन्दिघोष. नन्दिघोषोऽर्जुनरथे घोषे वृन्दिजनस्य च, मे, वि. नन्दिघोषो वन्दिघोषे स्यन्दने च किरीटिनः, हे.

नन्दिन्. नन्दी हरप्रतीहारे गर्दभाण्डे वटद्रुमे। नन्दिनुत्रमायां गङ्गायां ननान्दृधेनुभेदयोः, मे. नन्दी हरप्रतीहारे गर्दभाण्डे वटद्रुमे। नन्दिनी तु ननान्दायां धेन्वां सुरसरित्यपि, वि. नन्दी गिरिशवेत्रिणि। गर्दभाण्डे वटे, हे.

नन्दिवर्द्धन. स्यान्नन्दिवर्द्धनो भर्गे पक्षान्ते तनयेऽपि च, मे.

नन्द्यावर्त्त. नन्द्यावर्तः पुमान् वेश्मप्रभेदे तगरद्रुमे, मे. नन्द्यावर्तः स्मृतो वेश्मप्रभेदे तगरद्रुमे, वि. नन्द्यावर्त्तो गृहान्तरे । तगरे, हे. V. मोच.

नभस्. नभः क्लीवं व्योम्नि पुमान् घने । घ्राणश्रावणवर्षासु विसतन्तौ पतद्ग्रहे, मे. नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभाः स्मृतः, वि. नभो व्योम्नि नभा घ्राणे विसतन्तौ पतद्ग्रहे । मा ऽपि श्रावणे, हे. नभः खं श्रावणे नभाः, अ.

नभश्चमस. स्यान्नभश्चमसश्चन्द्रे चित्रापूपेन्द्रजालयोः, मे, वि. नभश्चमसश्चन्द्रमायया: । चित्रापूपे, हे.

नभश्चर. नभश्चरा विहङ्गमे । विद्याधरे घने वाते, मे. नभश्चरो घने वाते विद्याधरविहङ्गयोः, वि. नभश्चरः खगेऽम्बुदे । विद्याधरे समीरे च, हे. नभश्चरौ पक्षिदेवौ, त्रि.

नभस. नभसस्तु नदीपतौ । गगणे ऋतुभेदे च, हे.

नमुचि. नमुचिस्तु पुमान् दैत्यभेदे कुसुमकार्मुके, मे. नमुचिः स्मरदैत्ययोः, वि. नमुचि दितिजे कामे, हे. नमुचि दितिजस्मरे, त्रि.

नय. नया नीतिद्यूतविशेषयोः, मे. नयो नीतौ द्यूतभेदे, वि. नयः स्यान्नैगमादिषु । नीतिद्यूतभिदोः, हे.

नर. नरोऽजे मनुजेऽर्जुने । क्लीवन्तु रामकर्पूरे, मे. नरन्तु रामकर्पूरे नरोऽजे मानवेऽर्जुने, वि. नरो मर्त्येऽर्जुनेऽच्युते । नरन्तु रामकर्पूरे, हे. नरोऽजे मानवेऽर्जुने, त्रि.

नरक. नरकः पुंसि निरयदैवारातिप्रभेदयोः, मे. नरकौ दैत्यनिरयौ, हे. नरको निरये दैत्ये, वि, त्रि.

नरङ्ग. नरङ्गस्तु वरण्डके । मेहने न द्वयोश्च, मे. नरङ्गं तु वरण्डके । शेफे नरङ्गमप्याहुः, वि. नरङ्गः शेफे वरण्डे, हे.

नरेन्द्र. नरेन्द्रस्तु महीपाले, विषवैद्ये च पुंस्त्रयम्, मे. नरेन्द्रो

वार्त्तिके राज्ञि विषवैद्ये च कथ्यते, वि. नरेन्द्रो वार्त्तिके राज्ञि विषवैद्ये च, हे. नरेन्द्रो राजिके राज्ञि विषवैद्येऽपि दृश्यते, त्रि. नरेन्द्रौ नृपवाचकौ, ह.

नर्त्तक. नर्त्तकः केलके पोटगलचारणयो र्नटे। नर्त्तकी लासिका-याञ्च करेण्वामपि योषिति, मे. नर्त्तकः केलके नटे। द्विपे पोटगले चापि नर्त्तकी लासिका द्विपी, हे. नर्त्तकी लासिकायाञ्च करेण्वामपि नर्त्तकी। नर्त्तकः खेलके पोटगलचारणयो र्नटे, वि.

नर्मठ. नर्मठश्चुचुके षिड्गे, मे, वि. नर्मठौ षिड्गचूचुकौ, हे. नर्मठं चूचुके षिड्गे, हा.

नर्मद. नर्मदः केलिसचिवे नर्मदा सरिदन्तरे, मे, वि. नर्मदा रेवानर्मालयोः, हे.

नर्मरा. नर्मरा तु दरीभाण्डसुरलानिष्कलासु च, मे, वि.

नल. नलः पोटगले राज्ञि पितृदेवे कपीश्वरे। कमलेऽपि कुनद्याञ्च क्रमेण क्लीवयोषिति, मे. नलः पोटगले राज्ञि पितृदेवे कपीश्वरे। नली मनःशिलायान्तु नलिने तु नलं मतम्, वि. नलो राज्ञि कपौ नड़े। पितृदेवे नलन्तु स्यात् पद्मं नली मनःशिला, हे.

नलद. नलदं स्यात् पुष्परसोशीरमांसीषु न द्वयोः, मे. नलदं सत्रात् पुष्परसे मांसिकोशीरयोरपि, वि. नलदा मांसत्रां नलदमुशीरमक-रन्दयोः, हे.

नलिन. नलिनी पद्मिनीव्योमनिम्नगाकमलाकरे। नपुंसकं नीलिकायां न पुंसि सरसीरुहे, मे. नलिनी पद्मिनीपद्मव्योमसिन्धुस-रोवरे। नलिकायाञ्च नलिनी नलिनं कमले जले, वि. नलिनं नलि-कातोयाम्बुजेषु नलिनी पुनः। पद्माकरे गङ्गाजिन्योः, हे. खगङ्गायां नलिनी, त्रि.

नव. नवं नवेत्र पुमान् स्तुतौ, मे. नवं नवेत्र स्तवे विदुः, वि. नवो नवेत्र स्तुतौ, हे.

नवफलिका. नवफलिका स्त्री नवेत्र नवजातरजोऽङ्गनायाञ्च, मे. स्यान्नवफलिका नवेत्र नवजातरजःस्त्रियाम्, वि. नवफलिका तु नवे नवरजःस्त्रियाम्, हे. नवफलिका नवरजस्यपि, त्रि.

नवाह. नवाहः सत्रान्नवदिने नवाहः प्रतिपत्तिथौ, वि. नवाहस्त्वाद्यतिथौ नववासरे, हे.

नह. प्रत्यारम्भे नहः प्रोक्तः, ह.

नहुष. नहुषो नागभेदे सत्रात् सोमवंश्यनृपेऽपि च, मे. नहुषो राज्ञि भुजगे, त्रि. नहुषो राजविशेषे नागभिद्यपि, हे.

नाक. नाकस्तु त्रिदिवेऽस्वर्गे, मे. नाकः स्वः खे, हे. नाकः स्वर्गान्तरीक्षयोः, वि. आकाशे त्रिदिवे नाकः, अ. कथ्यतेऽम्बरे नाकः, ह.

नाकुली. नाकुली कुक्कुटीकन्दे रास्नायां चविके स्त्रियाम्, मे. नाकुली कुक्कुटीकन्दे नाकुली चव्यरास्नयोः, वि. नाकुली चव्यरास्नयोः। कुक्कुटीकन्दे, हे.

नाग. नागं नपुंसके रङ्गे सीसके करणान्तरे। नागः पन्नगमातङ्गक्रूराचारिषु तोयदे। नागकेशरपुन्नागनागदन्तकमुस्तके। देहानिलप्रभेदे च श्रेष्ठे सत्रादुत्तरे स्थितः, मे. नागन्तु सीसके रङ्गे क्लीवन्तु करणान्तरे। नागः पन्नगमातङ्गक्रूराचारिषु तोयदे। नागकेसरपुन्नागे नागदन्तकमुस्तके। देहानिलप्रभेदेऽथ श्रेष्ठे सत्रादुत्तरस्थितः, वि. नागं रङ्गे सीसपत्रे क्लीवन्तु करणान्तरे। नागो मतङ्गजे सर्पे पुन्नागे नागकेसरे। क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च। देहानिलविशेषे च श्रेष्ठे सत्रादुत्तरस्थितः, हे. गजेऽपि नागमातङ्गौ, अ. नागः श्रेष्ठभसर्पेषु क्लीवं सीसकरङ्गयोः, त्रि. नागो वृक्षविशेषे स्यात् नागौ वारणपन्नगौ, अने. कुञ्जरे नागः, ह.

नागदन्त. नागदन्तो द्विपरदे गृहान्निर्गतदारुणि। नागदन्ती तु कुम्भायां श्रीहस्तिन्यामपि स्त्रियाम्, मे. नागदन्तो द्विपरदे गृहान्निर्गतदारुणि। नागदन्ती तु कुम्भायां श्रीहस्तिन्यामपीष्यते, वि. नाग-

दन्तो हस्तिदन्ते गेहान्निःसृतदारुणि। नागदन्ती श्रीहस्तिन्यां कुम्भाख्यभेषजेऽपि च, हे.

नागपाश. नागपाशः पुमान् स्त्रीणां करणे वरुणायुधे, मे. नागपाशः स्मृतः स्त्रीणां करणे वरुणायुधे, वि. नागपाशस्तु योषिताम्। करणे वरुणास्त्रे च, हे.

नागपुष्प. नागपुष्पस्तु पुन्नागनागकेसरचम्पके, मे, वि. नागपुष्पस्तु पुन्नागे चम्पके नागकेसरे, हे.

नागर. नागरं सुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे, मे. नागरं मुस्तके शुण्ठ्यां विदग्धे नागरोऽन्यवत्। शंसन्ति नगरोद्भूते रतबन्धे च नागरम्, वि. नागरम्। शुण्ठीमुस्तकपौरेषु, हे. राजकशेरुण्यपि नागरम्, श्र.

नागवारिक. नागवारिक उद्दिष्टो राजकुञ्जरहस्तिपे। गणस्थराजे गरुड़े चित्रमेखलकेऽपि च, मे. नागवारिको गणस्थराजे राजेभहस्तिपे। चित्रमेखले गरुड़ेऽपि, हे. नागवारिक उद्दिष्टो राजकुञ्जरहस्तिपे। गणस्थराजे गरुड़े चित्रमेखलके क्वचित्, वि.

नागाञ्जना. नागाञ्जना नागयष्टिः करिसुन्दरिका क्वचित्, हा. नागाञ्जना नागयष्टिकरिसुन्दरिकाख्ययोः, वि. नागञ्जना नागयष्टौ द्विरदस्य च सुन्दरे, हे, मे.

नाट्य. नाट्यं तौर्यत्रिके लास्ये, मे. नाट्यं लास्ये तौर्यत्रिकेऽपि च, हे.

नाड़ी. नाड़ी नाले व्रणान्तरे। शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च। तथा षट्क्षणकालेऽपि, मे. नाड़ी नाले शिरागण्डदूर्वयोः स्याद्व्रणान्तरे। नाड़ी षट्क्षणकालेऽपि चर्यायां कुहनस्य च, वि. नाड़ी कुहनचर्यायां घटिकागण्डदूर्वयोः। नाले गुणान्तरे स्नायौ, हे. नाड़ी नालेऽपि षट्क्षणे, श्र.

नाड़ीतरङ्ग. नाड़ीतरङ्गः काकोले हिण्डके रतहिण्डके, मे, वि, हे.

नादेयी. नादेयी नागरङ्गे स्यात् जयायामम्बुवेतसे। भूमिजम्ब्वां जवायाञ्च व्यङ्गुष्ठेऽपि च योषिति, मे. नादेयी नागरङ्गे स्यात् जयायां जलवेतसे। भूमिजम्ब्वां जवायाञ्च व्यङ्गुष्ठे च समीघ्यते, वि. नादेयी जलवानीरे भूजम्बूनागरङ्गयोः। व्यङ्गुष्ठे च जपायाञ्च, हे.

नाना. नानाशब्दो विनार्थेऽपि तथाऽनेकोभयार्थयोः, मे, वि. नाना विनोभयानेकार्थेषु, हे. अनेकार्थे भवेन्नाना, रु.

नाभि. नाभि मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे, मे. नाभिः प्राणङ्गजे क्षत्रे चक्रान्तश्चक्रवर्त्तिनोः। नाभिः प्रधाने कस्तूरीमदे च क्वचिदीरितः, वि. नाभिः क्षत्रप्रधानयोः। चक्रमध्ये मृगमदे प्राणङ्गे मुख्यराज्ञि च, हे. क्षत्रियेऽपि च नाभि र्नाी, अ. मुख्यराट्क्षत्रयोः पुंसि नाभिः प्राणङ्गके द्वयोः। चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे, वि. आदिष्टः क्षत्रियो नाभि र्नाभिश्चक्रस्य पिण्डिका। कुटुम्बस्याग्रणी नाभि र्नाभिर्निम्नोदरी तथा, अने.

नाभील. नाभीलं वङ्क्षणे नार्थ्याः स्त्रक्कृगभाण्डयोरपि, मे. नाभीलं तूत्तमस्त्रियाः। वङ्क्षणे नाभिगर्भाण्डे, हे. नाभीलं नाभिगर्भाण्डे वङ्क्षणे चोत्तमस्त्रियाम्, वि.

नाम. नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते, मे. नाम प्राकाश्यसम्भाव्यकुत्साभ्युपगमेषु च, वि. नाम प्राकाश्यकुत्सयोः। सम्भाव्याभ्युपगमयोरलीके विस्मये क्रुधि, हे. नाम प्राकाश्यसम्भाव्यकोधोपगमकुत्सने, अ.

नायक. नायको नेतरि श्रेष्ठे हारमध्यमणावपि, मे, वि. नायको मणिभिन्नेत्प्रधानेषु, हे.

नार. नारस्तर्णकनीरयोः, मे, वि. नारं शुण्ठ्यां नारौघे च, वि.

नारकीट. नारकीटोऽश्मकीटे स्यात् स्वदत्ताशाविहन्तरि, मे, वि. नारकीटः स्वदत्ताशाविहन्तर्यश्मकीटके, हे.

नारङ्ग. नारङ्गः पिप्पलीरसे। यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च, मे. नारङ्गं पिप्पलीरसे। नागरङ्गे विटे जन्तौ यमजेऽपि प्रकीर्त्तितम्, वि. नारङ्गो विटजन्मिनोः। कणारसे नागरङ्गे, हे.

नाराच. नाराचश्रेषणिकायां ना लोहवाणाम्बुहस्तिनोः, मे. नाराचो लोहवाणे स्यान्नाराचो जलहस्तिनि। नाराचश्रेषणिकायाञ्च, वि. नाराचो लोहसायके। जलेभे नाराचश्रेषणश्रास्, हे.

नारायण. नारायणोऽच्युतेऽभीरुगौर्य्यौ नारायणी मता, मे. नारायणोऽच्युतेऽभीरुगौर्य्यौ नारायणीं विदुः, वि. नारायणस्तु केशवे। नारायणी शतावर्य्युमा श्रीः, हे.

नाला. नाला दण्डे सरोजस्य नाली शाककलम्बके, वि. नाला न ना पद्मदण्डे नाली शाककडम्बके, मे. नालं काण्डे मृणाले च नाली शाके कडम्बके, हे.

नालिका. अथ नालिका। नाले काले चुल्लिरन्ध्रे विवरे वेणुभाजने, हे

नालीक. नालीकं शरशल्याङ्गेष्वब्जखण्डे नपुंसकम्, मे. नालीकोऽङ्गे शरे शल्ये नालीकं पद्मवर्द्धने, हे. नालीकं शरखण्डेऽब्जे नालीकः शरशलययोः, वि. नालीकौ पद्मनाराचौ, त्रि.

नाश. नाशः पलायनेऽपि स्यान्निधनानुपलम्भयोः, मे. नाशः पलायने प्रोक्तो निधनानुपलम्भयोः, वि. नाशः पलायने स्वतन्त्रौ परिध्वस्तावदर्शने, हे. नाशः पलायने स्वतन्त्रौ, त्रि.

नासा. नासा तु नासिकायाञ्च द्वारोर्द्ध्वदारुणि स्त्रियाम्, मे. नासा तु नासिकायां स्यात् नासा द्वारोर्द्ध्वदारुणि, वि. नासा घोणा। द्वारोर्द्ध्वदारुणोः, हे.

नाह. नाहस्तु बन्धने कूटे, मे. नाहो बन्धनकूटयोः, वि.

नि. नि निवेशक्षयार्थयोः। नित्यार्थे संशयक्षेपकौशलोपरमेषु च। सामीप्याश्रयदानेषु मोक्षान्तर्भावबन्धने। राश्यधोभावविन्यासे, मे. नि

स्यात् क्षेपे भृशार्थे च नित्यार्थे दानकर्मणि। सन्निधानोपरमयोः संश्रया-श्रयराशिषु। मोक्षेऽन्तर्भावेऽधोभावे बन्धने कौशलेऽपि च, हे. नि निवेश-भृशार्थाधोभावविन्यासराशिषु। आश्रये बन्धने मोक्षे दानकर्मणि दर्शने। अन्तर्भावे च सामीप्यकौशलोपरमेषु च। नित्यार्थे संशये च, वि.

निःश्रेणि. निःश्रेणिरधिरोहिण्यां खर्जूरीपादपे स्त्रियाम्, मे. निःश्रेणिस्त्वधिरोहिण्यां खर्जूरीपादपेऽपि च, वि. निःश्रेणिरधिरोहिण्यां खर्जूरीपादपेऽपि, हे.

निःश्रेयस. निःश्रेयसन्तु कल्याणमोक्षयोः शङ्करे पुमान्, मे. निः-श्रेयसन्तु कल्याणे चन्द्रचूडापवर्गयोः, वि. निःश्रेयसन्तु कल्याणमोक्षयोः, हे.

निःसरण. अथ निःसरणं मृत्युपायमोक्षेषु निर्गमे, मे. निःसरणं स्यान्मरणोपायनिर्याणमुक्तिषु, वि. निःसरणं मृतौ। उपाये गेहादिमुखे निर्वाणे निर्गमेऽपि च, हे.

निकर. निकरो निवहे सारे न्यायदेयधने निधौ, मे. निकरो निवहे सारे न्यायदेयधनान्तरे, वि. निकरः सारसङ्घयोः। न्यायदातव्य-वित्ते च, हे.

निकष. निकषः शाणफलके निकषा यातुमातरि, मे, हे. निकषाऽ-न्तिकमध्ययोः, मे. निकषा त्वन्तिके मध्ये रक्षोऽम्बायां त्वनव्ययम्, वि.

निकाय. निकायस्तु पुमान् लक्ष्ये सधर्मिप्राणिसंहतौ। समुच्चये संहतानां निलये परमात्मनि, मे. निकायो निलये लक्ष्ये संहतानां समु-च्चये। एकार्थभाजिनिवहे परमात्मनि चेष्यते, वि. निकायः सद्मसङ्घयोः। परमात्मनि लक्ष्ये च, हे.

निकार. निकारः स्यात् परिभवे धान्यस्योत्क्षेपणेऽपि च, मे. निकारः स्यात् परिभवे धान्यस्योत्किरणेऽपि च, वि. निकारस्तु पराभवे। धान्योत्क्षेपे, हे. धान्योत्क्षेपे निकारः स्यात्, लि.

निकुम्भ. निकुम्भः कुम्भकर्णस्य तनये दन्तिकौषधौ, मे. निकुम्भः कथितो दन्त्यां कुम्भकर्णसुतेऽपि च, वि. निकुम्भः कुम्भकर्णजे। दन्त्याञ्च, हे.

निक्कत. निक्कतं विप्रलब्धे सत्रान् नीचे विप्रकृतेऽपि च, वि, मे. निक्कतं विप्रलब्धे विप्रकृतेऽधमे, हे.

निक्कृति. निकृति र्भर्त्सने, क्षेपे शठे शाठेऽप्यपि च स्त्रियाम्, मे. निकृति र्भर्त्सने क्षेपे वदन्ति शठशाठ्ययोः, वि. निकृतिः शठशाठ्ययोः। भर्त्सनेऽभिभवे क्षेपे, हे.

निगम. निगमो वाणिजे पुर्यां कटे वेदे बणिक्पथे, मे. निगमो वाणिजे पुर्यां कटे वेदे बणिक्पथे, वि. निगमाः पूर्बणिक्वेदनिश्चयाध्ववणिक्पथाः, हे. बणिक्पथः पुरं वेदो निगमः, अ. कटे लुण्ड्याञ्च निगमः, त्रि. श्रुतौ निगमः, ह.

निगरण. अथ निगरणं क्लीवं भोजने सत्राद् गले पुमान्, मे. निगरणं भोजनेऽपि गले निगरणो मतः, वि. निगरणं भोजने स्यात् निगरणः पुन र्गले, हे.

निग्रह. निग्रहो भर्त्सनेऽपि सत्रान् मर्यादायाञ्च बन्धने, मे. निग्रहो भर्त्सने प्रोक्तो मर्यादायाञ्च बन्धके, वि. निग्रहः। बन्धके भर्त्सने सीम्नि, हे.

निचुल. निचुलस्तु निचोले सत्राद् इज्जलाख्यमहीरुहे, मे. निचुलो हिज्जलतरौ निचुलश्च निचोलके, वि. निचुलस्त्विज्जलद्रौ निचोलके, हे.

निज. निजं स्वीये च नित्ये च, मे. निजमात्मीयनित्ययोः, वि. निजो नित्ये स्वकीये च, हे. स्वके नित्ये निजं त्रिषु, अ. नित्यं स्वञ्च निजं प्रोक्तम्, अने.

नितम्ब. नितम्बः स्कन्धरोधसोः। स्त्रियाः पश्चात् कटितटे कटके कटिमात्रके, मे. नितम्बो रोधसि स्कन्धे शिखरेऽपि कटीरके, वि. नितम्बः कटिरोधसोः। स्त्रियाः पश्चात् कटौ सानौ, हे.

नित्य. नित्यं सत्रात् सन्ततेऽपि च। शाश्वते त्रिषु, मे. नित्यन्तु सतते ध्रुवे, वि. नित्यं तते ध्रुवे हे. नित्ये सततशाश्वते, त्रि.

निदाघ. निदाघो ग्रीष्मकाले स्यात् उष्णस्वेदाम्बुनोरपि, मे, वि. प्रस्वेदोऽपि निदाघः स्यान् निदाघो ग्रीष्म उच्यते, अने. निदाघौ स्वेदतापौ च, त्रि. v. घर्म.

निदान. निदानं कारणे वत्सदामादिकारणद्वये, मे. निदानं कारणे रोगनिर्णये वत्सदामनि, वि. निदानं कारणे शुद्धौ तपसः फल-याचने। वत्सदाम्न्यवसाने च, हे. निदानमवसानेऽपि, ह.

निदेश. निदेशः शासनोपान्तभाषणेषु प्रयुज्यते, वि. निदेशः शासनेऽपि स्यात् कथनोपान्तयोरपि, मे. निदेशः स्यादुपकण्ठे शासने परिभाषणे, हे.

निधन. निधनं स्यात् कुले नाशे, मे, वि. निधनं कुलनाशयोः, हे, अ.

निधुवन. भवेन्निधुवनं कम्पे सुरते च नपुंसकम्, मे. निधुवनं सुरते कम्पनेऽपि च, वि. निधुवनं रते कम्पे, हे.

निन्दा. निन्दा स्यादपराधेऽपि कुत्सायामपि योषिति, मे. निन्दापवादे कुत्सायाम्, वि. निन्दा कुत्सापवादयोः, हे.

निपाक. निपाकः पचने स्वेदेऽप्यसत्कर्मफलेऽपि च, वि. निपाकः पचने स्वेदासत्कर्मफलयोरपि, हे.

निभ. निभस्तु कथितो व्याजे पुंलिङ्गः सदृशे त्रिषु, मे. निभो व्याजसदृक्षयोः, वि. स्यात् सदृशे व्याजे, हे. सदृशव्याजयो र्निभः, त्रि.

निमित्त. निमित्तं हेतुलक्ष्मणोः, मे, वि, हे, अ. निमित्तं हेतु-चिह्नागन्तुदेवादेश्यपर्वसु, त्रि.

निमिष, निमेष. निमेषनिमिषौ कालप्रभेदेऽक्षिनिमीलने, मे, वि. निमेषनिमिषौ नेत्रमीलने कालभिद्यपि, हे.

निम्ब. (निम्बः स्यात् पिचुमर्देऽपि तिक्तके च चिरायते, वि.)

नियति. नियति र्नियमे दैवे, मे, वि. नियती दैवसंयमौ, हे.

नियम. नियमो यन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते, मे. नियमो

यन्त्रणायां सत्रात् प्रतिज्ञायाञ्च संयमे, वि. नियमः सत्रात् प्रतिज्ञायां निश्चये यन्त्रणे व्रते, हे. नियमो निश्चये व्रते। यन्त्रणाबन्धयोश्च, त्रि.

नियामक. नियामकः कर्णधारे पोतवाहे नियन्तरि, मे, वि. नियामको नियन्तरि। पोतवाहे कर्णधारे, हे. नौवाहे स्यान्नियामकः। सख्ये गुरौ च, त्रि.

निर्. नि निर्णयनिषेधयोः, मे. नि निश्चये क्रान्ताद्यर्थे निर्निःशेषनिषेधयोः, वि. नि निश्चये क्रान्ताद्यर्थे विशेषप्रतिषेधयोः, हे. नि निश्चयनिषेधयोः, अ.

निरसन. निरसनं वधे प्रतिक्षेपे। निष्ठीवने, मे. निरसनं निरासे स्याद्वधे निष्ठीवनेऽपि च, वि. निरसनं निसूदने। निष्ठीवने निरासे च, हे.

निरस्त. निरस्तस्त्रिषु निष्ठ्यूते प्रेषितेषौ द्रुतोदिते। सन्त्यक्ते च प्रतिहते, मे. निरस्तः प्रेषितेषौ स्यात् निष्ठ्यूते त्वरितोदिते। सन्त्यक्ते च प्रतिहते, वि. निरस्तः प्रेषितशरे सन्त्यक्ते त्वरितोदिते। निष्ठ्यूते प्रतिहते च, हे.

निराकृति. निराकृतिरनाकारेऽस्वाध्याये त्रिषु वारणे। स्त्रियाम्, मे. निराकृतिः प्रतिक्षेपेऽप्यस्वाध्यायेऽप्यनाकृतौ, वि. निराकृतिरस्वाध्याये निराकारनिषेधयोः, हे. अस्वाध्याये कुरूपे च प्रत्युक्तौ स्त्री निराकृतिः, त्रि.

निरामय. निरामयस्तु पुंसि स्याद्‌ड्डिके त्रिषु नीरुजि, मे. निरामयोऽन्यवत् कल्ये स्यादिड्डिके निरामयः, वि. निरामयस्तु स्यादिड्डिके गतामये, हे.

निरूपण. निरूपणं स्यादालोके विचारे च निदर्शने, मे, वि. निरूपणं विचारावलोकनयो र्निदर्शने, हे.

निरूढ़. निरूढ़ो वस्तिभेदे स्यादूढ़स्त्यूल्ये च निश्चिते, मे. निरूढ़ो

वस्तिभेदे सरात् तर्कनिश्चितयोरपि, वि. निरूहो निग्रहे तर्के वस्ति-भेदे, हे.

निरोध. निरोधो नाशरोधयोः. मे, हे. निरोधो रोधनाशयोः, वि.

निर्ऋति. निर्ऋतिः सत्रादलक्ष्म्यां स्त्री दिशां पालान्तरे पुमान्, मे. निर्ऋतिः सत्रादलक्ष्म्यां च दिक्पाले निरुपद्रवे, वि. निर्ऋति-र्निरुपद्रवे। अलक्ष्म्यां दिक्पतौ चापि, हे.

निर्गुण्डी. निर्गुण्डी नीलशेफाल्यां सिन्धुवारद्रुमेऽपि च, मे. निर्गुण्डी सिन्धुवारकः। नीलशेफाल्यकन्दः. हे. निर्गुण्डी सिन्धु-वारके। नीलशेफालिकायाञ्च करहाटे च कुत्रचित्, वि.

निर्ग्रन्थ. निर्ग्रन्थो नग्नकेऽपि सरान्निःस्वबालिशयोरपि, मे, वि. निर्ग्रन्थो निःस्वमूर्खयोः। श्रमणे च, हे.

निर्ग्रन्थक. निर्ग्रन्थकः सत्रात् क्षपणे निष्फलेऽप्यपरिच्छदे, मे. निर्ग्रन्थकः सत्रात् क्षपणे निष्फलेऽप्यपरिग्रहे, वि.

निर्जर. निर्जरः सरात् पुमान् देवे जरात्यक्ते च वाच्यवत्। नि-र्जरा तु गुड़ूच्याञ्च तालपर्ण्यामपि स्त्रियाम्, मे. निर्जरस्तु जरात्यक्ते वाच्यवन्निर्जरः सुरे। निर्जरा तु गुड़ूच्यां स्यात् तालपत्र्यामपि क्व-चित्, वि. निर्जरो निर्जरे सुरे। निर्जरा तु तालपत्र्यां गुड़ूच्यां तल-भिद्यपि, हे. गुड़ूच्यामपि निर्जरा, लि.

निर्दट. निर्दटस्तु दयाशून्ये कथितो निष्प्रयोजने। परापवाद-रक्ते च वाच्यलिङ्गोऽयमिष्यते, मे. निर्दटो निर्दये स्मृतः। परापवाद-संरक्ते निर्दटो निष्प्रयोजने, वि. निर्दटो निष्प्रयोजने। निर्देऽन्य-दोषरते, हे.

निर्दर, निर्वर. निर्दरं निर्भरे सारेऽन्यवत् तु कठिनेऽत्रपे, निर्वरं सारे निर्भरे कठिनेऽत्रपे, वि. निर्वरन्तु गतत्रपे। कठिने निर्भ-सारे, हे.

निर्देश. निर्देशः शासनेऽपि सत्रात् कथनोपान्तयोरपि,

निर्देश: कथनाज्ञयोः, हे.

निर्नर. निर्नरोऽकाण्डे तुषाग्नौ, हे. निर्नरस्तु सहस्रांशुतुरङ्गे तुषपावके, वि, मे.

निर्भर्त्सन. निर्भर्त्सनं खलीकारेऽलक्तकेऽपि नपुंसकम्, मे. निर्भर्त्सनं खलीकारेऽलक्तके च, वि. निर्भर्त्सनमलक्तके। खलीकारे, हे. निर्भर्त्सनं खलीकारालक्तयोः, त्रि.

निर्मल. निर्मलं स्यात् निर्मालेऽत्र चाभ्रके च नपुंसकम्। मल-हीनेऽन्यलिङ्गञ्च, मे. निर्मलं विमले विद्यात् निर्माल्याभ्रकयोरपि, वि. निर्मलं विमलेऽभ्रके। निर्मालेऽत्र च, हे.

निर्माण. निर्माणं निर्मितौ सारे समञ्जसे नपुंसकम्, मे. निर्माणं निर्मितौ सारे निर्माणञ्च समञ्जसे, वि. निर्माणं सारनिर्मित्योः कर्मभेदे समञ्जसे, हे.

निर्मुट. निर्मुटः खर्परे सूर्ये, हा. v. हर्मुट.

निर्मुक्त. निर्मुक्तस्त्यक्तसङ्गे स्यात् मुक्तकञ्चुकभोगिनि, मे, वि. निर्मुक्तो मुक्तनिर्मोकभुजङ्गे निष्परिग्रहे, हे.

निर्मोक. निर्मोको मोचने व्योम्नि सन्नाहे सर्पकञ्चुके, मे. निर्मोको मोचके व्योम्नि सन्नाहे सर्पकञ्चुके, वि. निर्मोको व्योम्नि सन्नाहे मोचके सर्पकञ्चुके, हे.

निर्याण. निर्याणं वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे, मे. निर्याणं वारणापाङ्गदेशे मोक्षे च निर्गमे, वि. निर्याणं निर्गमे मोक्षे गजापाङ्गप्रदेशयोः, हे.

निर्यातन. निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च, मे, श्रा. निर्यातनं वैरशुद्धौ दाने न्यासार्पणे मतौ, वि. निर्यातनं वैरशुद्धौ दाने न्याससमर्पणे, हे.

निर्यूह. निर्यूहः शेखरे द्वारे निर्यासे नागदन्तके, वि, मे. निर्यूहो द्वारि निर्यासे शेखरे नागदन्तके, हे. v. निर्व्यूह.

निर्वर. v. निर्दर.

निर्वाण. निर्वाणमस्तं गमने निर्वृतौ गजमज्जने। सङ्गमेऽप्यपवर्गे च, मे. निर्वाणमस्तं गमने निर्वृतौ गजमज्जने। अपवर्गे च, वि. निर्वाणं मोक्षनिर्वृत्यो र्विश्रान्ते करिमज्जने, हे. अथ मज्जने। निर्वाणं निर्वृतौ मोक्षे, त्रि.

निर्वाद. निर्वादः स्याल्लोकवादे परिनिष्ठितवादयोः, मे. निर्वादः सत्रात् परीवादे परिनिष्ठितवादयोः, वि. निर्वादस्तु लोकवादेऽपवादे, हे. निर्वादो जनवादेऽपि, अ.

निर्वासन. निर्वासनं हिंसने सत्रान् नगरादेर्वहिष्कृतौ, मे. निर्वासनं हिंसने च नगरादेर्वहिष्कृतौ, वि. निर्वासनन्तु मारणे। पुरादेशस्य वहिष्कारे, हे.

निर्वृति. निर्वृतिः। मोक्षे स्तत्रौ सुखे सौस्थ्ये त्र, हे. निर्वृतिः सुस्थतायां सत्राद् अस्तंगमनसौख्ययोः, वि. निर्वृतिः सुस्थितावस्तंगमने च सुखे स्त्रियाम्, मे. निर्वाणे सुस्थितत्वे च निर्वृतिः, त्रि.

निर्व्यूह. द्वार्यापीड़े क्वाथरसे निर्व्यूहो नागदन्तके, अ. निर्व्यूहो निर्गतापीड़निर्यासद्वारभूमिषु, अने. v. निर्यूह.

निर्वेश. निर्वेशस्तु पुमान् भोगे वेतने मूर्च्छनेऽपि च, मे. निर्वेशो मूर्च्छने भोगे निर्वेशो वेतनेऽपि च, वि. निर्वेश उपभोगे स्यान् मूर्छने वेतनेऽपि च, हे. निर्वेशो भृतिभोगयोः, अ.

निवात. निवातो दृढ़सन्नाहे वातस्शून्येऽपि चाश्रये, मे. निवातो दृढ़सन्नाहे वातान्ते चाश्रयेऽपि च, वि. निवातो वातरहिते दृढ़सन्नाहआश्रये, हे. निवातावाश्रयावातौ शस्त्राभेद्यञ्च वर्म यत्, अ. निवातमाश्रयं विद्यादभिन्नं कवचं तथा, अने.

निवेश. निवेशः पुंसि विन्यासे शिविरोद्वाहयोरपि, मे. निवेशः शिविरोद्वाहविन्यासेषु प्रकीर्तितः, वि. निवेशः सैन्यविन्यासे शिविरोद्वाहयोरपि, हे.

निश्चमन. निश्चमनमुक्तं दृष्टौ श्रुतौ, मे. श्रुतौ दृष्ट्यां निश्चमनम्, त्रि. निश्चमनं श्रुतौ दृष्टौ, वि. V. निशामन.

निशा. निशा दारुहरिद्रायां स्यात् त्रियामाहरिद्रयोः, मे, वि. निशा रात्रौ हरिद्रायाम्, हे. निशा रात्रि र्हरिद्रा च, त्रि.

निशाचर. निशाचरस्तु रक्षसि। फेरुपेचकसर्पेषु पांशुलायां निशाचरी, मे. निशाचरः पेचकाहियातुधानेषु फेरवे। निशाचरी पांशुलायाम्, वि. निशाचरस्तु राक्षसः। सर्पे घूके शृगाले च। निशाचरी तु पांशुला, हे. पांशुला च निशाचरी, त्रि.

निशान्त. निशान्तं त्रिषु शान्ते स्यात् क्लीवन्तु भवनोषसोः, मे. निशान्तं सदने शान्ते प्रभातेऽपि, हे. निशान्तः कथितः शान्ते निशान्तं भवनोषसोः, वि.

निशामन. निशामनं दर्शने स्याद् आलोचने न द्वयोः, मे. दृष्ट्यालोचे निशामनम्, वि. निश्चमननिशामने। निरीक्षणश्रवणयोः, हे.

निशीथ. निशीथस्तु पुमानर्द्धरात्रे स्याद् रात्रिमात्रके, मे. निशीथोऽप्यर्द्धरात्रे स्यान् निशीथो रात्रिमात्रके, वि. निशीथस्तु रात्रिमात्रार्धरात्रयोः, हे.

निश्वारक. निश्वारकः पुरीषस्य क्षये स्वैरे समीरणे, मे, वि. निश्वारकः समीरणे। पुरीषस्य क्षये स्वैरे, हे.

निषङ्ग. निषङ्गः सङ्गते तूणे, मे. निषङ्गः सङ्गतूणयोः, वि, त्रि. निषङ्गस्तूणसङ्गयोः, हे.

निषद्वर. निषद्वरस्तु जम्बाले निशायान्तु निषद्वरा, मे. निषद्वरस्तु जम्बाले निशायाञ्च निषद्वरी, वि. निषद्वरः स्मरे पङ्के निषद्वरी पुनर्निशि, हे.

निषध. निषधः कठिने देशे तद्राजे पर्वतान्तरे, मे. निषधः कठिने देशे तद्राजे च नगान्तरे, वि. निषधस्तु पर्वते कठिने स्वरे। देशतद्राजयोश्चापि, हे.

निषाद. निषादः स्वरभेदे स्याच्चण्डाले धीवरान्तरे, मे. निषादः श्वपचे स्वरे, वि, हे. निषादौ श्वपचस्वरौ, त्रि.

निष्क. निष्कस्त्री साष्टहेमशते दीनारकर्षयोः। वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च, मे. निष्कः कर्षे हेमनि तत्पले। दीनारे साष्टसुवर्णशते वक्षोविभूषणे, हे. निष्कमष्टाधिकस्वर्णशते दीनारकर्षयोः। वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च, वि. साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले। दीनारेऽपि च निष्कोऽस्त्री, अ. पलमण्डनयो र्निष्को निष्को दीनारकर्षयोः, धने.

निष्कल. निष्कलस्तु कलाशून्ये नष्टवीर्ये च वाच्यवत्, मे. निष्कलस्तु नष्टबीजे कलोज्झिते, हे. निष्कलस्तु कलाशून्ये नष्टबीजे तु वाच्यवत्, वि.

निष्काशित. निष्काशितो निर्गमितेऽध्याहिते धिक्कृतेऽपि च, मे, वि.

निष्कुट. निष्कुटस्तु गृहोद्याने स्यात् केदारकपाटयोः, मे, वि. निष्कुटो गृहवाटिका। केदारकः कपाटश्च, हे. कपाटेऽपि च निष्कुटः। कोटरेऽपि, त्रि. गृहद्वाश्याश्च निष्कुटः, ह.

निष्क्रम. निष्क्रमो बुद्धिसम्पत्तौ निर्गमे दुष्कुलेऽपि च, मे, वि. निष्क्रमो दुर्गमे बुद्धिसम्पत्तौ दुष्कुलेऽपि च, हे.

निष्ठा. निष्ठा निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च, मे, वि. निष्ठोत्कर्षव्यवस्थयोः। क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते, हे. निष्ठा निष्पत्तिनाशान्ताः, अ. निष्ठा क्लेशेऽवसाने च व्यवस्थोत्कर्षयो र्व्रते, ह.

निष्ठुर. निष्ठुरः कठिनेऽश्लीले, हा.

निष्पाव. निष्पावः शूर्पपवने राजमाषे कडङ्गरे। पवने शिम्बिकायां ना निर्विकल्पेऽन्यलिङ्गकः, मे. निष्पावः शूर्पपवने राजमाषे कडङ्गरे। पवने सिम्बिकायां च निष्पावो निर्विकल्पके, वि. निष्पावः पवने शूर्पपवने निर्विकल्पके। वल्ले कडङ्गरे सिम्बराम्, हे. निष्पावः शूर्पवातेऽपि, हा.

निस्. नि र्निषेधे च निश्चये। साकल्यातीतयोः, मे. नि र्निश्चये निषेधे च साकल्यातीतयोरपि, वि. v. निर्.

निसर्ग. निसर्गो रूपसर्गयोः, मे. निसर्गः सर्गशीलयोः, वि. निसर्गः सर्गे स्वभावे, हे.

निस्तरण. स्यान्निस्तरणमुपाये निस्तारे तरणेऽपि च, मे. निस्तरणं स्यादुपाये निस्तारे निर्गमेऽपि च, वि. निस्तरणन्तु निस्तारे तरणोपाययोरपि, हे.

निस्तल. निस्तलं वर्तुले चले, मे, वि. निस्तलन्तु तले वृत्ते, हे.

निस्तुषित. अथ निस्तुषितं त्यक्ते त्वग्विहीने लघूकृते, मे. निस्तुषितं निस्त्वचि स्याद् वर्जिते च लघूकृते, वि. निस्तुषितं वर्जिते स्याद् गतत्वचि लघूकृते, हे.

निस्त्रिंश. अथ निस्त्रिंशः खड्गे ना निर्दये त्रिषु, मे. निस्त्रिंशो निर्दये खड्गे, वि. निस्त्रिंशो निर्घृणे खड्गे, हे. निस्त्रिंशौ खड्गनिर्दयौ, त्रि. निस्त्रिंशौ खड्गपापिष्ठौ, अने. निस्त्रिंशोऽकरुणेऽपि च, हा.

निह्नव. निह्नवः पुंसि निकृताववि‌श्वासापलापयोः, मे. निह्नवं निकृतौ विद्याद् अविश्वासापलापयोः, वि. निह्नवः स्यादविश्वासेऽपलापे निकृतावपि, हे. अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः, अ.

नीकाश. नीकाशो निश्चये तुल्ये, वि, मे, हे.

नीच. नीचः पामरे वामनेऽपि च, मे. नीचस्तु वामने पामरे स्मृतः, वि. नीचः पामरखर्वयोः, हे. वामने पामरे नीचः, त्रि.

नीचैस्. नीचैः स्वैराल्पयो र्मतम्, मे, वि. नीचैः स्वैराल्पनीचेषु, हे.

नीड़. नीड़ं स्थानकुलाययोः, मे. नीड़ं स्थाने कुलाये च सकारपूर्वकोऽन्तिके, वि. नीड़ं स्थाने खगालये, हे.

नीति. नीति र्नयेऽपि स्यात् प्रापणेऽपि च योषिति, मे. नीतिस्तु प्रापणे नये, वि. नीति र्नये प्रापणे च, हे.

नीध्र. नीध्रं नेमौ वलीके द्रौ रेवतीभे च कानने, वि. नीध्रन्तु वलीवननेमिषु। चन्द्रे च रेवतीभे च, हे. नीध्रं नेमौ वलीके द्रौ रेवतीभेऽपि कानने, मे. वलीकवनयो र्नीध्रम्, त्रि.

नीप. नीपः कदम्बबन्धूकनीलाशोकद्रुमेषु च, मे. नीपो धूलिकदम्बे स्यात् नीलाशोके च धम्बिनि, त्रि.

नीरज. नीरजं कुष्ठपद्मयोः, मे. नीरजं कमले कुष्ठे, वि, त्रि. नीरजं पद्म कुष्ठयोः, हे.

नील. नीलन्तु नीलीरक्ते ना निध्यद्रिवानरान्तरे। नीली वृक्षभेदनीलिन्योः, मे, नीलः कृष्णे नगान्तरे। नीलः कपीश्वरे नीली वृक्षलाञ्छनभेदयोः, वि. नीलो वर्णे मणौ शैले निधिवानरभेदयोः। नीलौषध्यां लाञ्छने च, हे.

नीलकण्ठ. V. कालकण्ठ.

नीलङ्गु, नीलाङ्गु. नीलाङ्गुः स्यात् कृमौ पुंसि भम्भराल्यां तु योषिति, मे. नीलाङ्गुः कृमिजातिके। भम्भरालयां प्रसूते च, हे. नीलङ्गुः कृमिभेदे स्याद् भम्भरालीसुसारयोः, वि.

नीलाञ्जसा. नीलाञ्जसाऽप्सरोभेदे सरिद्भेदे च विद्युति, मे. नीलाञ्जसाऽप्सरोभेदे सरिद्भेदेऽपि विद्युति, वि. नीलाञ्जसा नदीभेदेऽप्सरोभेदे तडितयपि, हे.

नीलाम्बर. नीलाम्बरः प्रलम्बघ्ने कौणपे च शनैश्चरे, मे. नीलाम्बरः प्रलम्बघ्ने कौणपे क्रूरलोचने, वि. नीलाम्बरो बलभद्रे राक्षसे क्रूरलोचने, हे.

नीलिका. नीलिका नीलिनीचुद्रारोगशेफालिकासु च, मे. नीलिका नीलिनीचुद्रारोगशेफालिकास्वपि, वि.

नीवर. सन्यासीवरो वणिजके वास्तव्ये च पुमानयम्, मे. सन्यासीवरो वाणिजके वास्तव्येऽपि च नीवरः, वि. नीवरस्तु वास्तव्येऽपि वणिजयपि, हे.

नीवी. नीवी परिपणे स्त्रीणां कटीवस्त्रबन्धने, मे. नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससः, वि. नीवी स्त्रीकटीवस्त्रबन्धने। मूलद्रव्ये परिपणे, हे. स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च, अ. नीवी परिपणेऽप्युक्ता, ह.

नीहार. नीहारो हिमनीलयोः, अने.

नु. नु वितर्कविकल्पयोः। विकल्पानुनयातीते प्रश्नहेत्वपदेशयोः, मे. नु प्रश्नेऽनुनये तीर्थे स्याद्विकल्पवितर्कयोः, हे. नु स्यात् प्रश्ने विकल्पार्थेऽप्यतीतानुनयार्थयोः, वि. नु पृच्छायां विकल्पे च, अ.

नुचित्. नुचित् प्रश्नवितर्कयोः, ह.

नूनम्. नूनन्तु निश्चिते तर्के स्मरणे वाक्यपूरणे, मे. नूनं निश्चिततर्कयोः, वि. नूनं तर्के निश्चिते च, हे. तर्कनिश्चितयो र्नूनम्, ह. नूनं तर्केऽर्थनिश्चये, अ.

नृशंस. पापीयांसो नृशंसाः स्युर्नृशंसा बन्दिनः स्मृताः, अने.

नेत्. नेद्विकल्पनिषेधयोः, मे.

नेत्र. नेत्रं मन्थगुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि नाड्यान्तु नेता नेतरि वाच्यवत्, मे. नेत्रं मथिगुणे वस्त्रे तरुमूले विलोचने। नेत्रं रथे च नाड्याञ्च नेता नेतरि वाच्यवत्, वि. नेत्रं वस्त्रे मथो गुणे। मूलाक्षिनेतृषु, हे. स्यान्नाड्यांशुकयो र्नेत्रम्, अ. नेता नेतरि नेत्रञ्च गुणे मूले विलोचने, त्रि. नेत्रं वस्त्रविशेषञ्च नेत्रं चक्षुरुदाहृतम्। परिवर्तगुणो नेत्रो नेत्रः कस्तूरिकामृगः, अने. नेत्रं मूले, ह.

नेपथ्य. नेपथ्यं स्यादलङ्कारे रङ्गजत्रायां नपुंसकम्, मे. नेपथ्यं रङ्गभूमौ स्यात् नेपथ्यञ्च प्रसाधने, वि.

नेम. नेमः कालेऽवधौ खण्डे प्राकारे कैतवेऽपि च, मे. नेमः कालेऽवधौ गर्त्ते प्राकारे कैतवेऽपि च, वि. नेमस्त्वर्द्धे प्राकारगर्त्तयोः। अवधौ कैतवे काले, हे.

नेमि. नेमि र्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम्, मे. नेमि-

श्चिकायां कूपस्य चक्रान्ते तिनिसद्रुमे. वि. नेमिः कूपत्रिका प्रधिः। तिनि-शोऽरिष्टनेमिश्च, हे.

नैगम. नैगमं स्यादुपनिषद्‌वणिजो नागरेऽपि च, मे, वि. नैगमो नयपौरोपनिषद्वतिषु वाणिजे, हे. नागरो वणिक्। नैगमौ द्वौ, श्र.

नैपाली. नैपाली तु नवमालीकुनटीसुवहासु च, मे. नैपाली नवमालीमनःशिलासुवहासु च, वि. नैपाली मनःशिला स्यात् सुवहा नवमालयपि, हे.

न्यच्(ञ्). न्यङ् नीचनिम्नयोः. मे. न्यग् निम्ने नीचकात्स्न्यर्योः, हे. न्यङ् नीचे निम्नकात्स्न्यर्योः वि.

न्यच्च. न्यच्चः परशुरामे स्यात् न्यच्चः कात्स्न्र्यनिकृष्टयोः, वि. न्यच्चः कात्स्न्यर्निकृष्टयोः। जामदग्न्येऽपि. हे. न्यच्चं कात्स्न्यर्निकृष्टयोः, श्र. न्यच्चं कात्स्न्यर्ये तृणेऽपि च। क्लीबेऽथ पुंसि भार्गवे निकृष्टे पुनरन्यवत्, मे.

न्यग्रोध. न्यग्रोधस्तु पुमान् व्यामवटयोश्च शमीतरौ। न्यग्रोधी वृषपत्रिकायाम्, मे. न्यग्रोधो व्यामवटयो न्यग्रोधश्च शमीतरौ। न्यग्रोधी विषपर्णाख्य मोहनाख्यौषधावपि. वि. न्यग्रोधो वटपादपे। अस्यां व्यामे न्यग्रोधी तु मोहनाख्यौषधीभिदि। वृषपर्ण्याम्, हे. व्यामो वटश्च न्यग्रोधौ, श्र. न्यग्रोधौ वटकामुकौ, श्रने.

न्यङ्कु. न्यङ्कु मुनौ मृगे पुंसि. मे. न्यङ्कु, मृगे मुनौ, हे. न्यङ्कु, मृगे ऋषौ, वि.

न्युब्ज. न्युब्जो दर्भमये स्रुचि। कर्मरङ्गफले क्लीबं कुब्जाधो-मुखयोस्त्रिषु, मे. न्युब्जस्तु कर्मरङ्गे स्यान्न्युब्जः प्रोक्तः कुष्ठरुग्, वि। अधोमुखे च कुब्जे च न्युब्जो वाचयर्वाद्यते. वि. न्युब्जः कुब्जे कुष्ठरुग्, स्रुचि। अधोमुखेऽपि च न्युब्जं कर्मरङ्गतरोः फले, हे.

न्यूङ्ख. न्यूङ्खः सम्यङ्मनोज्ञे च साम्नः षट्प्रणवेषु च, मे. न्यूङ्खः साम-विशेषस्य षड़ोङ्कार्यग्रामतिप्रिये, हे. न्यूङ्खः सम्यङ्मनोज्ञेऽपि साम्नः षट्-प्रणवेष्वपि, वि. न्यूङ्खः साम्नि मनोरमे, लि.

न्यून. न्यूनं गर्ह्योनयोः, मे. न्यूनं हीनवद्धीनगर्ह्ययोः, हे. हीनन्यूनावूनगर्ह्यौ, अ.

प. (पो ना वाताण्डपूतेषु पा पातरि च कीर्त्तितः। स्त्रियां तु रक्षणे पाने पूते पूरितके च सः. मे.) तीक्ष्णश्च लोहितः शूरो दक्षपार्श्वश्च पार्थिवः। पद्मेशो नास्तिकः फादिः पकारोऽपि प्रकीर्त्तितः, मा. प. कुबेरः समाख्यातः पश्चिमे च प्रकीर्त्तितः। पवने पः समाख्यातः पः स्यात् पाने च पातरि, ए.

पक्ति. पक्तिः स्त्री गौरवे पाके, मे. पक्ति गौरवपाकयोः. स्त्रि. हे, वि.

पक्व. पक्वं परिणतेऽपि स्यात् विनाशाभिमुखे त्रिषु. मे. पक्वं परिणतार्थे स्याद् विनाशाभिमुखेऽपि च, वि. पक्वं परिणते नाशाभिमुखे, हे.

पक्ष. पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः। केशादेः परतो वृन्दे बले सखिसहाययोः। चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोः. मे. पक्षस्तु मासार्द्धे गृहसाध्ययोः। चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात् परश्चये। पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे, हे. पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः। पक्षश्च परतो वृन्दे बले सखिसहाययोः। पतत्रे चुल्लिरन्ध्रे च देहाङ्गे राजकुञ्जरे, वि. पक्षः सहायेऽपि, अ. पक्षौ मासार्द्धपार्श्वौ च, त्रि. पक्षो गरुति मासार्द्धे पक्षशब्दो निगद्यते, शा. देहावयवमासार्द्धपतत्रग्रहभित्तिषु। परिग्रहे समीपे च षट्सु पक्षो निगद्यते, ह. केशे पेक्षः समूहार्थः पक्षः साध्यविरोधयोः। बलकालपतत्रेषु सहायकरिपार्श्वयोः, धा.

पक्षक. पक्षकस्तु पुमान् पार्श्वद्वारे च पार्श्वमात्रके, मे. पक्षकः पार्श्वमात्रे च पक्षद्वारे च पक्षकः, वि. पक्षकस्तु पार्श्वद्वारे पार्श्वमात्रेऽपि कथ्यते, हे.

पक्षचर. अथ पक्षचरश्चन्द्रे पृथक्चारिगजेऽपि च, मे. भवेत्

पञ्चचरो विधौ। यूथभ्रष्टपृथक्चारिवारणेऽपि प्रकीर्त्तितः, वि. पञ्चचरो यूथभ्रष्टपृथक्चारिगजे विधौ, हे. अथ निशापतौ। पृथक्चरगजे यूथभ्रष्टे पञ्चचरः स्मृतः, त्रि.

पचति. पचतिश्च भवेत् पद्ममूले च प्रतिपत्तियौ। (स्त्रियाम्), मे. पचतिः पद्ममूले स्यात् पचतिः प्रतिपत्तियौ, वि. पचतिः प्रतिपत्तियौ। पद्ममूले, हे. मूले तु पचतिः पद्मभेदयोः, अ.

पक्षिन्. पक्षिणी पूर्णिमायां स्यात्तिथ्यां शाकिनीभिदि। आगामिवर्त्तमानाहर्युक्तरात्रावपि स्त्रियाम्, मे. पक्षिणी पूर्णिमायां स्यात् पक्षिणी शाकिनीभिदि। आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी, वि. पक्षिणी पूर्णिमाख्योः शाकिनीरात्रिभेदयोः, हे.

पक्ष्मन्. पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि, मे, वि. पक्ष्माक्षिलोम्नि तन्त्वादिसूक्ष्मांशे कुसुमच्छदे। गरुति किञ्जल्कलोम्यापि, हे. पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि, अ.

पङ्क. पङ्कोऽस्त्री कर्द्दमे पापे, मे. पङ्कः कर्द्दमपापयोः, वि. पङ्कोऽघे कर्द्दमे, हे. पङ्कोऽस्त्री कर्द्दमांहसोः, त्रि.

पङ्कार. पङ्कारः शैवले सेतौ सोपाने जलकुब्जके, मे, वि, हा. पङ्कारो जलकुब्जके। सोपाने शैवले सेतौ, हे.

पङ्किल. पादालिन्देऽपि पङ्किलः, हा.

पंक्ति. पंक्ति र्द्दशाक्षरच्छन्दोदशसंख्यालिषु स्त्रियाम्, मे. पंक्ति-र्द्दशाक्षरच्छन्दोदशसंख्यावलीष्वपि, वि. पंक्तिश्छन्दःश्रेण्योः, हे. पंक्ति-श्छन्दोऽपि दशमम्, अ. श्रेणि र्द्दश च पंक्तिः स्यात्, त्रि.

पञ्चगुप्त. पञ्चगुप्तस्तु चार्वाकदर्शने कमठेऽपि च, वि. पञ्चगुप्तस्तु चार्वाकदर्शने कमठे पुमान्, मे. पञ्चगुप्तश्चार्वाकदर्शने। कमठे, हे.

पञ्चता. पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति, मे, वि. पञ्चता पञ्चभावे स्यात् पञ्चता मरणेऽपि च, हे.

पञ्चत्व. पञ्चत्वं पञ्चानां भावे प्राणानामत्ययेऽपि च, मे. पञ्चत्वं

निधनं स्मृतम्। पञ्चानामपि भावे च, वि. पञ्चत्वं भावे पञ्चानां प्राणानामत्ययेऽपि च, हे.

पञ्चदशी. पञ्चदशी त्वमावास्यापौर्णमास्योश्च योषिति, मे. भवेत् पञ्चदशी पौर्णमास्याममावास्ययोरपि. वि.

पञ्चनख. पञ्चनखो गजे कूर्मे, वि. पञ्चनखस्तु कच्छपे। गजे, हे. कूर्मे पञ्चनखो गजे, त्रि.

पञ्चम. पञ्चमो रागभेदे स्यात् स्वरभेदे च पञ्चमी। पाण्डवानाञ्च पत्न्यां स्त्री पञ्चानां पूरणे त्रिषु, मे. पञ्चमो रागभेदे स्यात् पञ्चानामपि पूरणे। पञ्चमश्चतुरे स्वरे पञ्चमी पाण्डवस्त्रियाम्, वि. पञ्चमो रुचिरे दक्षे पञ्चानामधिपूरणे। रागभेदे पञ्चमी तु द्रौपद्याम्, हे. पञ्चमः स्वरसंज्ञयोः, त्रि.

पञ्चानन. पञ्चाननः शिवे सिंहे, मे, वि, हे.

पञ्चाली. पञ्चाली पुत्तिकागीत्योः स्त्रियां पुंभूम्नि नीवृति, मे. पञ्चाली पुत्तिकागीत्योः पञ्चालो जनदेशयोः, वि. पञ्चालो नीवृदन्तरे। पञ्चाली पुत्तिकागीत्योः, हे.

पञ्चालिका. पञ्चालिका स्त्रियां वस्त्रपुत्तिकागीतिभेदयोः, मे. पञ्चालिका भवेद्वस्त्रपुत्तिकागीतिभेदयोः, वि. पञ्चालिका वस्त्रकृतपुत्तिका-गीतिभेदयोः, त्रि.

पट. -पटश्चित्रपटे वस्त्रेऽस्त्री प्रियालद्रुमे पुमान्, मे. पटः पियालवृक्षे च सुचेले च पुरस्कृतः, वि. पटः पद्मपरित्राणे क्रयवस्तुप्रतिष्ठयोः, अने.

पटल. अथ पटलं पिटके च परिच्छदे। छदिर्दृग्रोगतिलके क्लीवं व्रजे पुनर्ना, मे. पटलं छदिषि व्रजे। पिटके नेत्ररोगे च तिलके च परिच्छदे, वि. पटलं तिलके नेत्ररोगे च्छदिषि सञ्चये। पिटके परिवारे च, हे. छदिर्नेत्ररुजोः क्लीवं समूहे पटलं न ना, अ.

पटह. पटहो ना समारम्भे आनके पुंनपुंसकम्, मे. पटहस्तु

समारम्भे आनके पटहं मतम्, वि. पटहो वाद्य आरम्भे, हे. समारम्भेऽपि पटहः, वि.

पटि. पटिः स्त्री पटभेदे स्याद् गुग्गुलौ कुम्भिकाद्रुमे, मे. पटिः पटविशेषेऽपि गुग्गुलौ कुम्भिकाद्रुमे, वि.

पटु. पटु दक्षे च नीरोगे चतुरेऽप्यभिधेयवत्। पटोले तु पुमान् क्लीवे छत्रालवणयोरपि, मे. पटुस्तीक्ष्णे नीरोगे चतुरेऽन्यवत्। पटुः पटोलपत्रेऽपि छत्रालवणयोः पटुः, वि. अथ पटु लवणे पटुस्तीक्ष्णपटोलयोः। स्फुटे रोगविहीने च छत्रायां चतुरेऽपि च, हे. पटुरामयनिर्मुक्तः पटुश्चतुरतीक्ष्णयोः, शा.

पटोल. पटोलं वस्त्रभेदे नौषधौ जयोत्स्नरान्तु योषिति, मे. पटोलमोषधीवस्त्रभिदो जयोत्स्नयां पटोल्यपि, हे, वि.

पट्ट. पट्टः पेषणपाषाणे व्रणादीनाञ्च बन्धने। चतुष्पथे च राजादिशासनान्तरपीठयोः, मे, वि. पट्टी ललाटभूषायां पट्टी लाक्षाप्रसादने, वि. पट्टश्चतुष्पथे पीठे राजादेः शासनान्तरे। व्रणादिबन्धने पेषाश्मनि पट्टी ललाटिका। रोध्रः, हे. पट्टः स्त्रात् फलके नृपशासने, त्रि. व्रणस्रावरणे पट्टः पट्टो भूनिहिताक्षरः। वीरकक्षा पटः पट्टः पट्टः सग्रादपि चासनम्, अने.

पण. पणो वराटमाने स्यात् मूल्ये कार्षापणे ग्लहे। क्रयशाकाटिकाद्यूतव्यवहारे भृतौ धने, मे, वि. पणः कार्षापणे ग्लहे। विक्रयशाकादिमुष्टौ बद्धे मूल्ये भृतौ धने। व्यवहारे च दात्ता द्यूतत्यक्तेगण्डकविंशतौ, हे. पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च, अ. ग्लहे माने वराटानां मूल्ये कार्षापणे धने। द्यूते विक्रयशाकादेर्बद्धे मुष्टौ भृतौ पणः, शा.

पण्ड. पण्डः पण्डे धियि स्त्री सत्रात्, मे. पण्डः पण्डे धियां पण्डा, वि. पण्डः पण्डे पण्डा बुद्धौ, हे. पण्डः पण्डे मतौ स्त्रियाम्, त्रि.

पण्डित. पण्डितः सिह्लके कवौ, मे, वि. पण्डितः सिह्लधीमतोः, हे.

मे. प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः, वि. प्रकाण्डः स्तम्बशस्तयोः। स्कन्धमूलान्तरे तरोः, हे. स्तम्बे शस्ते प्रकाण्डोऽस्त्री, त्रि.

प्रकार. प्रकारस्तुल्यभेदयोः, मे. प्रकारः सदृशे भेदे, वि, हे. प्रकारौ भेदसादृश्ये, अ.

प्रकाश. प्रकाशस्तु स्फुटे ख्यातः प्रहासातपयोरपि, मे. प्रकाशोऽतिप्रसिद्धे स्यात् प्रहासातपयोः स्फुटे, वि. प्रकाशः स्फुटहासयोः। उद्द्योते च प्रसिद्धे च, हे. प्रकाशोऽतिप्रसिद्धेऽपि, अ.

प्रकीर्णक. प्रकीर्णकं चामरे स्याद् विस्तारे ना तुरङ्गमे, मे. प्रकीर्णकं ग्रन्थभेदे चामरे विस्तरे हये, वि. प्रकीर्णकं तुरङ्गमे। चामरे विस्तरे ग्रन्थभेदे, हे. चामरे ग्रन्थभेदे च विस्तारेऽपि प्रकीर्णकम्, त्रि.

प्रकीर्य. प्रकीर्यः पूतिकरजे विनिकीर्ये तु वाच्यवत्, मे. प्रकीर्यः पूतिकरजे विनिकीर्णे तु वाच्यवत्, वि.

प्रकृति. प्रकृति र्गुणसाम्ये स्याद् अमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गेऽमी पञ्चत्यादयः स्त्रियाम्, मे. प्रकृतिः सहजे योनावमात्ये परमात्मनि, वि. प्रकृति र्योनिशिल्पिनोः। पौरामात्यादिलिङ्गेषु गुणसाम्यस्वभावयोः। प्रत्ययात् पूर्विकायाञ्च, हे. प्रकृति-र्योनिलिङ्गे च, अ. प्रकृति र्गुणसाम्ये स्यात् स्वभावामात्ययोरपि, त्रि. सत्त्वादीनां साम्यावस्थां प्रकृतिं वदन्ति तत्त्वज्ञाः। पौरामात्यादीनि च कारणकार्यस्वरूपाणि, ह.

प्रकोष्ठ. प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च। भूपकक्षान्तरेऽपि स्यात्, मे. प्रकोष्ठो विस्तृतकरे भूपकक्षान्तरेऽपि च। कूर्परादधरे चापि, वि. प्रकोष्ठः कूर्पराधस्ताद् भूपकक्षान्तरेऽपि च। हस्ते च विस्तृतकरे, हे. प्रकोष्ठौ बाहुगेहांशौ, त्रि. प्रकोष्ठः कूर्परस्याधः प्रकोष्ठो द्वारकोष्ठके, अने.

प्रक्रम. प्रक्रमः क्रमेऽवसरे, मे. प्रक्रमोऽवसरे क्रमे, वि, हे.

प्रक्रिया. प्रक्रिया त्वुत्पादने स्याद् अधिकारप्रकारयोः, हे.

प्रखर. प्रखरो हयसन्नाहे कुक्कुरेऽश्वतरेऽपि च। पुंसि त्रिष्वत्यन्तखरे, मे. प्रखरोऽश्वतरे शुनि। तुरङ्गानाञ्च सन्नाहे प्रखरोऽतिभृशे खरे, वि. प्रखरः पुनः। वेसरे हयसन्नाहे कुक्कुरेऽतिभृशे खरे, हे.

प्रगाढ़. प्रगाढ़ः कृच्छ्रदृढ़योः, मे. प्रगाढ़ो दृढ़कृच्छ्रयोः, वि, हे. प्रगाढ़ं भृशकृच्छ्रयोः, अ.

प्रग्रह. प्रग्रहस्तु तुलासूत्रे वन्द्यां नियमने भुजे। हयादिरश्मौ रश्मौ च सुवर्णे हलिपादपे, मे. प्रग्रहस्तु तुलासूत्रे वन्द्यां नियमने भुजे। हयादिरश्मौ रज्ज्वां च सुवर्णे हलिपादपे, वि. प्रग्रहः किरणे भुजे। तुलासूत्रेऽश्वादिरश्मौ सुवर्णे हलिपादपे॥ बन्धने वन्द्यां, हे. प्रग्रह आबन्धनेऽपुत्रकः, ह. v. प्रग्राह.

प्रग्राह. प्रग्राहस्तु तुलासूत्रे वृषादिप्रग्रहेऽपि च, मे. प्रग्राहः स्मृतः तुलासूत्रे वृषादीनाञ्च बन्धने, हे. तुलासूत्रेऽश्वादिरश्मौ प्रग्राहो प्रग्रहोऽपि च, अ.

प्रघण (घाण). प्रघणस्ताम्रकुम्भे स्यादलिन्दे लोहमुद्गरे, मे, वि. प्रघाणोऽलिन्दके ताम्रकलशे लोहमुद्गरे, हे. प्रघणोऽस्त्वगृहांशयोः, त्रि.

प्रचण्ड. प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनि, मे, वि. प्रचण्डः स्यात् प्रतापिनि। वलक्षे करवीरे च, हे.

प्रचलाक. प्रचलाकः शराघाते शिखण्डे च भुजङ्गमे, मे. प्रचलाकः शराघाते वर्हिचन्द्रे भुजङ्गमे, वि. प्रचलाको भुजङ्गमे। शराघाते शिखण्डे च, हे. शराहते च सर्पे च प्रचलाकं प्रचक्षते, हा.

प्रचलाकिन्. प्रचलाकी मयूरे स्याद्भुजङ्गे चापि दृश्यते, मे. प्रचलाकी भुजङ्गे स्यात् चित्रमेखलकेऽपि च, वि. प्रचलाकी सर्पे मयूरे, हे.

प्रचेतस्. प्रचेताः पाशिनि॰ मुनौ ना प्रकृष्टहृदि त्रिषु, मे.

प्रजनन. प्रजननं योनौ जन्मन्यपि क्लीवम्, मे. भवेत् प्रजननं

योनौ जन्मनि प्रगमेऽपि च, वि. प्रजननं प्रगते योनिजन्मनोः, हे.

प्रजा. प्रजा लोके च सन्ताने, मे. प्रजा सन्तानलोकयोः, वि. प्रजा लोके सन्ततौ च, हे. प्रजा स्यात् सन्ततौ जने, अ.

प्रजापति. प्रजापतिश्च दक्षादौ महीपाले विधातरि, मे. प्रजापति विधौ भूपे, वि. प्रजापति ब्रह्मराजो जामातरि दिवाकरे। वह्नौ त्वष्टरि दक्षादौ, हे. विधौ भूपे प्रजापतिः, लि.

प्रज्ञ. प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति, मे. प्रज्ञा बुद्धौ पण्डितेऽपि प्रज्ञो वाच्यवदिष्यते, वि. प्रज्ञः प्राज्ञः प्रज्ञा तु प्रेमुषी, हे. प्रज्ञा संबुद्धिचिह्नयोः, अने.

प्रज्ञान. प्रज्ञानं बुद्धिचिह्नयोः, मे, अ. प्रज्ञानं लाञ्छने धियि, वि. प्रज्ञानं बुद्धौ चिह्ने च, हे.

प्रणय. प्रणयः प्रेम्णि विश्रम्भे याञ्चाप्रसरयोरपि, वि. प्रणयः प्रसरे प्रेम्णि याञ्चाविश्रम्भयोरपि। निर्वाणेऽपि, मे. प्रणयः प्रेमयाञ्चयोः। विश्रम्भे प्रसरे चापि, हे. प्रणयास्त्वमी। विश्रम्भयाञ्चाप्रेमाणः, अ.

प्रणाद. प्रणादस्तु पुमांस्तारशब्दे च श्रवणामये, मे. प्रणादस्तारशब्दे स्यात् प्रणादः श्रवणामये, वि.

प्रणायत्र. प्रणाय्योऽसम्मते प्रोक्तोऽप्यभिलाषविवर्जिते, वि. प्रणाय्यः कामवर्जिते। असम्मते, हे. प्रणाय्योऽसम्मतेऽपि स्यादभिलाषविवर्जिते, मे.

प्रणिधान. प्रणिधानं प्रयत्ने स्यात् समाधौ च प्रवेशने, मे. प्रणिधानं प्रयत्ने स्यात् प्रवेशे च समाहितौ, वि. प्रणिधानसभियोगे समाधानप्रयोगयोः, हे.

प्रणिधि. प्रणिधि नाऽर्थने चरे, मे. प्रणिधिश्चरे याञ्चायाम्, वि. प्रणिधि र्याचने चरे, हे. प्रणिधिः प्रार्थने चरे, अ.

प्रणिहित. अथ प्रणिहितं न्यस्ते प्राप्तेऽपि च समाहिते, मे. भवेत् प्रणिहितं लब्धे विन्यस्ते च समाहिते, वि. प्रणिहितन्तु संप्राप्तनिहितयोः समाहिते, हे.

प्रणीत. प्रणीतः संस्कृताग्नौ ना यज्ञपात्रान्तरे स्त्रियाम्। त्रिषु क्षिप्तोपसम्पन्नविहितेषु प्रवेशिते, मे. प्रणीतः संस्कृते वह्नौ विहिते च प्रवेशिते। निक्षिप्ते चोपसम्पन्ने प्रणीतो भेद्यवन्मतः, वि. प्रणीत उपसम्पन्ने कृते क्षिप्ते प्रवेशिते। संस्कृताग्नौ, हे.

प्रतति. प्रतति विस्तृतौ वल्ल्याम्, मे. प्रतति विस्तृति लता, हे.

प्रतल. प्रतलं पातालभेदे तताङ्गुलिकरे पुमान्, मे. प्रतलः पातालभेदे तताङ्गुलिकरेऽपि च, हे. V. सुतल.

प्रताप. प्रतापस्तापतेजसोः, मे. प्रतापः स्वेदतेजसोः, वि.

प्रति. प्रति प्रतिनिधाविथम्भूताख्यानाभिमुख्ययोः। मात्रार्थभागवीप्सासु लक्षणप्रतिदानयोः, मे. प्रति प्रतिनिधौ वीप्सालक्षणायां प्रयोगतः। मात्रार्थे चाभिमुख्ये च प्रतिदानादिषु प्रति, वि. प्रतीथम्भूतभागयोः। प्रतिदाने प्रतिनिधौ वीप्सालक्षणयोरपि, हे. प्रकाशे सम्भवे प्राज्ञः प्रधानसदृशे प्रति, रु. प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः, श.

प्रतिकार. प्रतिकारः समे भटे, वि, हे.

प्रतिकृति. प्रतिकृतिरर्चायां प्रतिनिधिप्रतिकारयोश्च स्त्री, मे. प्रतिकृतिः प्रतीकारे प्रतिमायाञ्च पूजने, वि. प्रतिकृतिस्तु पूजिते। प्रतिमायां प्रतीकारे, हे. प्रतिकारे प्रतिकृतिः प्रतिबिम्बे, त्रि.

प्रतिकृष्ट. प्रतिकृष्टं मतं गुह्ये द्विराकृष्टतरा च कर्षिते, मे, वि. प्रतिकृष्टन्तु गुह्ये स्याद् द्विराकृष्टतरा च कर्षिते, हे.

प्रतिक्षिप्त. प्रतिक्षिप्तं वारिते स्यात् प्रेषिते पञ्चकं त्रिषु, मे. प्रतिक्षिप्तं प्रतिहते प्रेषिते च निराकृते, वि. प्रतिक्षिप्तं प्रतिहते निषिद्धे प्रेषितेऽपि च, हे. प्रेषितेऽपि प्रतिक्षिप्तम्, त्रि.

प्रतिग्रह. प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे। द्विजेभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे, मे, वि. प्रतिग्रहः सैन्यपृष्ठे ग्रहभेदे पतद्ग्रहे। क्रियाकारे दानद्रव्ये तद्ग्रहे स्वीकृतावपि, हे.

प्रतिघ. प्रतिघः प्रतिघाते स्यात् क्रोधेऽपि परिकीर्त्तितः, मे. प्रतिघः

प्रतिघाते च रोषे च प्रतिघो मतः, वि. प्रतिघौ रुट्प्रतिघातौ, हे. प्रतिघो रोषघातयोः, त्रि.

प्रतिपत्ति. प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च। सम्प्राप्ते च प्रबोधे च पदप्राप्तौ च योषिति, मे. प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च। प्रागल्भ्ये च प्रबोधे च प्रतिपत्तिः प्रयुज्यते, वि. प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये बोधे, हे.

प्रतिपद्. प्रतिपत् स्त्री तिथौ मतौ, मे. प्रतिपत्तिथिसंविदोः, वि. प्रतिपत् संविदि तिथौ, हे. काय प्रतिपत् तिथिसंविदोः, त्रि. प्रतिपत् प्रतिपत्तावपि, रु.

प्रतिपन्न. प्रतिपन्नोऽनत्रलिङ्गः स्याद्विज्ञातेऽङ्गीकृतेऽपि च, मे. प्रतिपन्नः स्मृतो धीरे विज्ञातेऽङ्गीकृतेऽपि च, वि. प्रतिपन्नस्तु विक्रान्तेऽङ्गीकृतेऽपि च, हे.

प्रतिपादन. प्रतिपादनन्तु दाने प्रतिपत्तौ च बोधने, मे. सन्नात् प्रतिपादनं दाने प्रतिपत्तौ च बोधने, वि. प्रतिपादनं बोधनदानयोः, हे.

प्रतिबन्ध. प्रतिबन्धः कुलाचारः प्रतिबन्धो बलक्रिया, अने.

प्रतिभय. प्रतिभयं भये। घोरेऽपि, मे. प्रतिभयं भये। भीष्मे, हे.

प्रतिमा. प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि, मे. प्रतिमा दन्तबन्धे स्याद् गजस्यानुकृतावपि, वि. गजानां दन्तबन्धेऽपि प्रतिमाऽनुकृतावपि, त्रि.

प्रतिमान. प्रतिमानं प्रतिच्छायागजकुम्भान्तरालयोः, मे. प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः, वि, त्रि. प्रतिमानं प्रतिबिम्बे गजदन्तद्वयान्तरे, हे.

प्रतियत्न. प्रतियत्नस्तु संस्कारलिप्सोपग्रहणेषु च, मे, वि. प्रतियत्नः संस्कारे स्याद् उपग्रहणलिप्सयोः, हे. प्रतियत्नावुभौ लिप्सोपग्रहौ, अ. प्रतियत्नः संस्कारे लिप्सोपग्रहणयोश्च निर्दिष्टः, रु.

प्रतिरोधक. प्रतिरोधकस्तु चोरः सन्नाद् दुर्जनः प्रतिरोधकः, अने.

प्रतिश्रय. प्रतिश्रयः सभायाञ्चाश्रये, मे. प्रतिश्रयः सभायां स्याद् आश्रये च प्रतिश्रयः, वि. प्रतिश्रयः सभौकसोः, हे. सभायाञ्च प्रतिश्रयः, अ.

प्रतिष्कश. प्रतिष्कशः सहाये स्याद् वार्त्ताहरपुरोगयोः, मे, वि. प्रतिष्कशः पुरोगमे। वार्त्ताहरे सहाये च, हे. वार्त्ताहरे पुरोगे च सहाये च प्रतिष्कशः, त्रि.

प्रतिष्ठा. प्रतिष्ठा गौरवे स्थितौ। स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः, मे. प्रतिष्ठा स्थानमात्रके। गौरवे यागनिष्पत्तिचतुरक्षरपद्ययोः, वि. प्रतिष्ठा गौरवे स्थितौ। छन्दोजातौ योगसिद्धौ, हे.

प्रतिसर. भवेत् प्रतिसरो मन्त्रभेदे मालेऽत्र च कङ्कणे। व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डने। आरक्षे करसूत्रे च नियोजेऽत्र त्वन्यलिङ्गकः, मे. आङ्कः प्रतिसरं हस्तसूत्रे मालेऽपि मण्डने। व्रणशुद्धौ चमूपृष्ठे नियोज्यारक्षकङ्कणे। मन्त्रभेदेऽपि, त्रि. प्रतिसरश्चमूपृष्ठे नियोज्यकरसूत्रयोः। मन्त्रभेदे व्रणशुद्धे चारक्षे मण्डने स्रजि। कङ्कणे, हे. ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्, अ.

प्रतिसूर्यक. प्रतिसूर्यकमिच्छन्ति हृकलासोपसूर्ययोः, वि.

प्रतिसृष्ट. प्रतिसृष्टः प्रेषिते स्यात् प्रत्याख्याते च वाच्यवत्, मे, वि. प्रतिसृष्टः पुनः प्रत्याख्याते च प्रेषितेऽपि च, हे. प्रत्याख्याते प्रेषिते च प्रतिसृष्टं त्रिलिङ्गकम्, त्रि.

? प्रतिहत. प्रतिहतस्तु विद्विष्टे प्रतिस्खलितरुद्धयोः, हे. भवेत् प्रतिहतो द्विष्टे प्रतिस्खलितरुद्धयोः, वि, मे. द्विष्टेऽपि च प्रतिहतः, त्रि.

प्र(ती)तिहार. प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायान्तु योषिति, मे. प्रतीहारप्रतीहार्यौ द्वाःस्थे द्वारेऽप्यनन्तरे, वि. प्रतीहारो द्वारि द्वाःस्थे, हे. द्वारेऽपि प्रतिहारः, रु. द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे, अ.

प्रतीक. प्रतीकोऽवयवेऽपि स्यात् प्रतिकूलविलोमयोः, मे. प्रतीकोऽवयवे प्रोक्तः प्रतिकूलविलोमयोः, वि. प्रतीकोऽङ्गप्रतीपयोः, हे. प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम्, रु.

प्रतीच्य. प्रतीच्यः प्रतिपाल्ये स्यात् पूज्ये च, हे.

प्रतीत. प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु, मे. प्रतीतः सादरे ज्ञाते प्रख्याते प्राज्ञहृष्टयोः, वि. प्रतीतः सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोः, हे. ख्याते हृष्टे प्रतीतः, अ. प्रतीतः सादरेऽपि च, त्रि. v. वसन्तदूत.

प्रत्यच् (ञ्च्). प्रत्यग् दिग्देशकालेषु वाच्यवन्नितयेऽव्ययम्, मे. v. उदच्.

प्रत्यय. प्रत्ययः प्रथितत्वे च सनादिज्ञानयोरपि। आचारे शपथे रन्ध्रे विश्वासाधीनहेतुषु, मे. प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु। प्रथितत्वे सनादौ चापराधीनज्ञानयोरपि। अतिक्रमे च दण्डे च विनाशे दोषकृच्छ्रयोः, वि, प्रत्ययो ज्ञानरन्ध्रयोः। विश्वासे शपथे हेतौ आचारे प्रथितत्वयोः। अधीने निश्चये स्वादौ, हे. प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु। रन्ध्रे शब्दे, अ.

प्रत्यर्थिन्. प्रत्यर्थी वाच्यलिङ्गः स्यात् शत्रौ च प्रतिवादिनि, मे. प्रत्यर्थी कथितः शत्रौ प्रत्यर्थी प्रतिवादिनि, वि.

प्रत्यालीढ़. प्रत्यालीढ़न्तु चरणन्यासभेदेऽशिते त्रिषु, मे.

प्रतुग्दमनीय. प्रतुग्दमनीयमुपस्थेये धौतांशुकद्वये, मे, वि, हे.

प्रद्यष. प्रद्यषोऽष्टमुखे वसौ, मे, वि. प्रद्यषः स्याद् वसौ प्रातः, हे.

प्रथम. प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्, मे. प्रथमः स्यात् प्रधानाद्योः, हे. आद्ये प्रधाने प्रथमस्त्रिषु, अ.

प्रदर. प्रदरो रोगभेदे स्याद् विदारे शरभङ्गयोः, मे. प्रदरो रोगभेदे स्यात् प्रदरः शरभङ्गयोः, वि. प्रदरः शरे। भङ्गे रोगे, हे. प्रदरा भङ्गनारीरुग्बाणाः, अ. प्रदरौ रोगमार्गणौ, अने.

प्रदेश. प्रदेशो देशमात्रे स्यात् तर्जन्यङ्गुष्ठसम्मिते। भित्तावपि च, मे. प्रदेशो देशमात्रे स्यात् तर्जन्यङ्गुष्ठसम्मिते। भित्तावपि प्रदेशः स्यात्, वि. प्रदेशो देशमात्रके। भित्तौ मानविशेषे च, हे.

प्रदोष. प्रदोषः समये दोषे, मे. [illegible] प्रदोषः कालभेदे स्यात् प्रदोषो दोष भूषय[illegible], वि. प्रदोषः कालदोषयोः, हे.

प्रधन. प्रधनं दारणे रणे, मे, वि. प्र[illegible]धनं युधि दारणे, हे.

प्रधान. प्रधानं स्यान्महामात्रे प्र[illegible]कृतौ परमात्मनि। प्रज्ञायामपि च क्लीवमेकत्वे तूत्तमे सदा, मे. प्रधानं स्या[illegible]न्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायाञ्च प्रधानं स्याद् एकत्वे तु सदोत्तमे, [illegible] वि. प्रधानं प्रकृतौ बुद्धावुत्तमे परमात्म[illegible]नि। महामात्रे, हे. प्रधानं [illegible]मात्मा धीः, अ. प्रधानं प्रकृतावपि, ह. प्रधानं प्रकृतिः स्यान् प्रधानं वि[illegible]दुरुत्तमम्, अने.

प्रधूपिता. प्रधूपिता क्लेशितायां [illegible]यत्र गन्तव्य दिश्यपि, मे, वि. प्रधूपिता क्ले[illegible]शितायां रविगन्त्र्यदिश्यपि, हे.

प्रपञ्च. प्रपञ्चः सञ्चयेऽपि स्याद् [illegible] विस्तरे च प्रतारणे, मे. प्रपञ्चः सञ्चये प्रो[illegible]क्तो विस्तरे च प्रतारणे, वि. प्रप[illegible]ञ्चो विप्रलम्भने। विस्तरे सञ्चये चापि, हे. विपर्यासे विस्तरे च प्रपञ्चः, अ-

प्रपात. प्रपातो निर्झरेऽतटे, [illegible]. प्रपातो निर्झरे भृगौ, वि. प्रपातौ [illegible]गुनिर्झरौ, त्रि. प्रपातः सौ[illegible] भृगौ, हे.

प्रपितामह. प्रपितामह इतेरेष [illegible]वधौ पितृपितामहे, वि, मे.

प्रवाल. प्रवालोऽस्त्री किसलये वी[illegible]णादण्डे च विद्रुमे, मे. प्रवालो वल्लकी[illegible]दण्डे विद्रुमे नवपल्लवे, वि. प्रवा[illegible]लो विद्रुमे वीणादण्डेऽभिनवपल्लवे, हे. प्रवालमङ्कुरेऽप्यस्त्री, अ. वीणादण्[illegible]डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे, त्रि. वीणादण्डः प्रवालः स्यात् प्रवाल[illegible] पल्लवः स्मृतः। प्रवालो विद्रुमः प्रोक्तः प्रवालः सबलो गजः, अने.

प्रभव. प्रभवो जलमूले स्यात् [illegible] जन्महेतौ पराक्रमे। ज्ञानस्य पादि[illegible]स्थाने, मे. प्रभवो जलमूले स्यात् जन्मभूमौ पराक्रमे। आद्योपलब्ध्ये स्थाने, वि. प्रभवो जन्मकारणे। [illegible]आद्योपलब्ध्ये स्थानेऽपां मूले मुनिभिद्यपि, हे. स्याज्जन्महेतुः प्रभवः स्थानं [illegible] चाद्योपलब्ध्ये, अ.

प्रभाकर. प्रभाकरोऽग्निसूर्ययोः [illegible] मे.

प्रभाव. प्रभावः शक्तितेजसोः, मे, वि. प्रभावस्तेजसि शक्तौ, हे.

प्रभूत. प्रभूतस्तुद्गते प्राज्ये, मे, हे. प्रभूतं प्राज्य उद्गते, वि.

प्रमथ. प्रमथाः स्युराङ्गरीतक्यां हरपारिषदे पुमान्, मे. प्रमथोऽपि गणे प्रोक्तः पथ्यायां प्रमथा भवेत्, वि.

प्रमद. प्रमदः सम्मदे मत्ते स्त्रियामुत्तमयोषिति, मे. प्रमदः सम्मदे मत्तकामिन्यां प्रमदा मता, वि. प्रमदो मुदि। प्रमदा स्त्री, हे.

प्रमाण. प्रमाणं नित्यमर्यादाशास्त्रेषु सतवादिनि। इयत्तायाञ्च हेतौ च क्लीबैकत्वे प्रमातरि, मे. प्रमाणं नित्यमर्यादासत्यवादिप्रमातृषु। एकतायामियत्तायां हेतुशास्त्रेषु च स्मृतम्, वि. प्रमाणन्तु मर्यादासत्यवादिनोः। प्रमात्रैकतेयत्तानित्येषु हेतुशास्त्रयोः, हे. प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु, अ. शास्त्रे प्रमाणमिच्छन्ति स्थितौ हेतौ च कोविदाः, अने.

प्रमीढ़. प्रमीढ़ो मूत्रिते घने, वि, मे.

प्रमीत. प्रमीतं वाच्यलिङ्गं स्यात् प्रोक्षितेऽपि मृतेऽपि च, मे. प्रमीतन्तु प्रोक्षितेऽपि मृतेऽपि च, वि. प्रमीतं प्रोक्षिते मृते, हे.

प्रमुख. प्रमुखः प्रथमे श्रेष्ठे, मे, वि. प्रमुखं प्रथमे मुख्ये, हे. आदौ प्रधाने प्रमुखम्, त्रि.

प्रयाग. प्रयागस्तीर्थभेदे स्याद् यज्ञे शतमखाश्वयोः, मे, वि. प्रयागो वाजिशक्रयोः। यज्ञे तीर्थविशेषे च, हे.

प्रयोग. प्रयोगः कार्मणेऽपि स्यात् प्रयुक्तौ च निदर्शने, मे. प्रयोगः कार्मणे प्रोक्तः प्रयुक्तौ च निदर्शने, वि. प्रयोगस्तु निदर्शने। कार्मणे च प्रयुक्तौ च, हे.

प्रयोजन. प्रयोजनं कार्यहेत्वोः, मे, वि, हे.

प्ररूढ़. प्ररूढ़ो जरठे बद्धमूले, मे. प्ररूढ़ो जरठे स्मृतः। बद्धमूले, वि. प्ररूढ़ो जरठे वृद्धे, हे.

प्रलम्ब. प्रलम्बो दैत्यभेदे स्यात् त्रपुषेऽपि पयोधरे। लता-

ङ्कुरेऽपि शाखायां हारभेदे प्रलम्बने, मे. प्रलम्बो दैत्यभेदे स्यात् बाला-ङ्कुरकशाखयोः। प्रलम्बो हारभेदे स्यात् त्रपुषेऽपि पयोधरे, वि. प्रल-म्बस्तु प्रलम्बनम्। दैत्यस्तालाङ्कुरः शाखा, हे. प्रलम्बो दैत्यशाखयोः, त्रि. v. प्रालम्ब.

प्रलय. प्रलयो न्नतुकल्पान्तमूर्च्छापायेषु पुंस्ययम्, मे. प्रलयो न्नतौ। संहारे नष्टचेष्टत्वे, हे.

प्रवचन. अथ प्रवचनं वेदे प्रकृष्टवचनेऽपि च, मे. प्रवचनं स्मृतं वेदे प्रकृष्टवचनेऽपि च, वि. स्यात् प्रवचनमागमे। प्रकृष्टवचने, हे.

प्रवचनीय. अथ प्रवचनीयश्च स्यात् प्रवक्तृप्रवाचयोः, मे. भवेत् प्रवचनीयाख्यं प्रवाचेत्र च प्रवक्तरि, वि.

प्रवण. प्रवणो ना चतुष्पथे। क्रमनिम्नमहीभागोदारप्रह्वेषु च त्रिषु, मे. प्रवणः क्रमनिम्नोर्व्यामायत्ते च चतुष्पथे। प्रगुणेऽपि क्षणेऽपि स्यात्, वि. प्रवणस्तु क्षणे प्रह्वे क्रमनिम्ने चतुष्पथे। आयत्ते च, हे. प्रवणं क्रमनिम्नोवर्यां प्रह्वे ना तु चतुष्पथे, अ.

प्रवर. प्रवरः सन्ततौ गोत्रे क्लीवं श्रेष्ठे तु वाच्यवत्, मे. प्रवरं सन्ततौ गोत्रे श्रेष्ठे तु प्रवरोऽन्यवत्, वि. प्रवरं सन्ततौ गोत्रे श्रेष्ठे च, हे.

प्रवह. प्रवहस्तु वहिर्यात्रामातरिश्वप्रभेदयोः, मे. प्रवहो वायुभेदे स्याद् वायुमात्रे वहिर्गतौ, हे.

प्रवारण. प्रवारणं निषेधे स्यात् काम्यदाने च न द्वयोः, मे. प्रवारणं निषेधे स्यात् काम्यदाने प्रवारणम्, वि. प्रवारणं काम्य-दाने निषेधे च, हे.

प्रवाह. प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणः, मे. प्रवाहो व्यवहारे स्याद् अपि स्रोतसि वारिणः, वि. प्रवाहो व्यवहारा-म्बुवेगयोः, हे. प्रवाहो व्यवहारे च, त्रि.

प्रविदारण. प्रविदारणमाख्यातं सम्परायेऽवदारणे, मे. प्रवि-

दारणमाख्यातं सङ्करे च विदारणे, वि. प्रविदारणम्। दारणे युधि च, हे.

प्रवृत्ति. प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्त्तने। स्ववक्त्यादौ च (स्त्रियां), मे. प्रवृत्तिः कथिता वृत्तौ प्रवाहोदन्तयोरपि, वि. प्रवृत्ति र्वृत्तौ वार्तायां प्रवाहे, हे. वृत्तिवार्त्ताप्रवाहेषु प्रवृत्तिः, त्रि.

प्रवेणि. प्रवेणिः स्त्री कुथावेणप्रोः, मे. प्रवेणि र्वेणिकुथयोः, वि, हे.

प्रव्रजिता. अथ प्रव्रजिता मांसीमुण्डीरीतापसीषु च, मे. प्रव्रजिता तपस्विन्यां मुण्डीर्यत्रां मांसिकौषधौ, वि. प्रव्रजिता तु मुण्डीर्यत्रां तापसत्रां मांसिकौषधे, हे.

प्रष्ठ. प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि चण्डालिकौषधौ, मे. प्रष्ठः श्रेष्ठाग्रयोरुक्तः प्रष्ठा चण्डालिकौषधौ, वि.

प्रष्ठहायन. सत्रात् प्रष्ठहायनो धान्यविशेषे च मतङ्गजे, मे.

प्रसन्न. प्रसन्ना स्त्री सुरायां सत्रात् स्वच्छसन्तुष्टयोस्त्रिषु, मे. प्रसन्ना मदिरायाञ्च प्रसादसहितेऽन्यवत्, वि. प्रसन्नं प्रसादवत्। प्रसन्ना तु मदिरायाम्, हे.

प्रसर. प्रसरः प्रणये वेगे, मे. प्रसरः प्रणये वेगे सङ्करे च, वि. प्रसरस्तु सङ्करे प्रणये जवे, हे. प्रसरः प्रणयेऽपि निर्दिष्टः, रु.

प्रसव. प्रसवो गर्भमोचने। उत्पादे स्यादपत्तेऽपि फलेऽपि कुसुमेऽपि च, मे. प्रसवस्तु फले पुष्पे वृक्षाणां गर्भमोचने। तोकोत्पादे च, वि. प्रसवः पुष्पफलयोरपत्ये गर्भमोचने। उत्पादे च, हे. स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने, अ.

प्रसव्य. प्रसव्यं वाच्यलिङ्गं स्यात् प्रतिकूलानुकूलयोः, मे. प्रसव्यमनुकूले स्यात् प्रतिकूले च वाच्यवत्, वि. प्रसव्यस्तु प्रतिकूलानुकूलयोः, हे.

प्रसहन. प्रसहनमपि भङ्गे स्यात् क्षेपे, मे.

प्रसाद. प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु, मे, वि. प्रसादोऽनुग्रहस्वास्थ्यप्रसत्तिषु। काव्यगुणे, हे. सत्रात् प्रसादोऽनुरागेऽपि, अ. प्रसादस्त्वनुरोधने। स्वच्छे काव्यगुणे च, त्रि.

प्रसाधन. प्रसाधनी तु कङ्कत्यां सिद्धौ वेषे प्रसाधनम्, मे. प्रसाधनी कङ्कतिकासिद्ध्योर्वेषे प्रसाधनम्, वि. प्रसाधनी कङ्कतिकासिद्ध्योः प्रसाधनं पुनः। वेषे, हे.

प्रसिद्ध. प्रसिद्धो भूषिते ख्याते, मे, हे. प्रसिद्धोऽलङ्कृतेऽपि च। विख्यातेऽपि च, वि. प्रसिद्धौ ख्यातभूषितौ, अ.

प्रसू. प्रसूरश्वाजनन्योश्च कन्दलीवीरुधोः स्त्रियाम्, मे. प्रसूरश्वाजनन्योश्च कन्दलीवीरुधोरपि, वि. प्रसूरश्वा जनन्यपि, हे. प्रसूरश्वाऽपि, अ.

प्रसूत. प्रसूतं कुसुमे क्लीवं त्रिषु सञ्जातसूतयोः, मे. प्रसूतं वाच्यवज्जाते प्रसूतं कुसुमेऽपि च, वि. प्रसूतं जातपुष्पयोः, हे.

प्रसूति. प्रसूतिरुद्भवेऽपि स्यात् तनये दुहितर्यपि। स्त्रियाम्, मे. प्रसूतिस्तनयोत्पत्तौ तथा दुहितरि स्मृता, वि. प्रसूतिः स्यादपत्ये प्रसवेऽपि च, हे. प्रसूति जन्मतोकयोः, त्रि.

प्रसून. प्रसूनो वाच्यवज्जाते क्लीवन्तु फलपुष्पयोः, मे. प्रसूनं वाच्यवज्जाते प्रसूनं फलपुष्पयोः, वि. प्रसूनन्तु प्रसूते फलपुष्पयोः, हे. प्रसूनं पुष्पफलयोः, अ.

प्रसृत. प्रसृतः सुप्रसारे स्याद् विनीते वेगिते त्रिषु। अर्धाञ्जलौ तु पुंलिङ्गः जङ्घायां प्रसृता मता, मे. प्रसृतः सुप्रसारे स्याद् विनीते वेगितेऽपि च। अर्धाञ्जलौ तु प्रसृतं जङ्घायां प्रसृता मता, वि. प्रसृतस्त्वर्धाञ्जलौ वेगिविनीतयोः। तते च प्रसृता जङ्घा, हे. प्रसृतः कुब्जिते पाणौ जङ्घायां स्त्री गते त्रिषु, त्रि.

प्रसेक. प्रसेकः सेचने च्युतौ, मे, वि.

प्रसेव. प्रसेवः पुंसि वीणाङ्गे स्यूते च, मे. प्रसेवः कथितो धीरैर्वीणाङ्गस्यूतयोरपि, वि. प्रसेवस्तु वीणाङ्गस्यूतयो ह॑तौ, हे.

प्रस्तर. प्रस्तरो ग्रावणि मणौ, मे. प्रस्तरः प्रस्तारे ग्रावणि मणौ च, हे. V. संस्तर.

प्रस्थ. प्रस्थोऽस्त्रियां मानभेदे सानावुच्छ्रितवस्तुनि, मे. प्रस्थः शिखर-

मानयोः, वि. प्रस्थः सानौ मानभेदे, हे. प्रस्थोऽस्त्री सानुमानयोः, श. परिमाणेऽपि प्रस्थः, ह.

प्रस्फोटन. प्रस्फोटनं तु स्तूपे स्यात्ताड़ने च विकाशने, मे. प्रस्फोटनं भवेत् स्तूपे ताड़ने च प्रकाशने, वि. प्रस्फोटनं स्तूपे प्रकाशने। ताड़ने, हे.

प्रहत. प्रहतं वितते चुस्ते, मे, वि. प्रहतं विस्तृते चस्ते, हे.

प्रहसन. प्रहसनमपि प्रहासे रूपकभेदे च परिहासे, मे. प्रहसनन्तु प्रहासाक्षेपयो रूपकान्तरे, हे. प्रहसनं भवेद् भङ्गे प्रहासाक्षेपयोरपि, वि.

प्रहि. प्रहिः कूपः प्रहिः सरः, अने.

प्रह्लाद. प्रह्लादः प्रमदे दैत्ये, वि. प्रह्लादस्तु निनदे दानवान्तरे, हे.

प्राच्(ञ्च्). प्राक् पूर्वस्मिन्नवान्तरे। अग्रे प्रभातेऽतीते च देशे दिक्कालयोरपि, मे. प्राक् प्रभातेऽप्यतीते च दिग्देशकालतः स्मृतम्। प्रागग्रेऽपि च पूर्वस्मिन् भवे प्रागप्यनन्तरे, वि. प्राक् पूर्वस्मिन् प्रभाते दिग्देशकालेष्ववान्तरे। अतीतेऽग्रे, हे. प्राक्शब्दो दिशि देशे च काले च वाच्यलिङ्गकः, मे.

प्राण. प्राणो हृन्मारुते वाले काव्यजीवेऽनिले बले। पुंलिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु, मे. प्राणो हृन्मारुते वाले काव्यजीवेऽनिले बले। वाच्यवत् पूरिते प्राणं प्राणाश्चासुषु कीर्तिताः, वि. प्राणोऽनिले बले। हृद्वायौ पूरिते गन्धरसे प्राणास्तु जीविते, हे. वाले वाते बले प्राणः पूर्णे पुंभूम्नि चासुषु, त्रि.

प्राणक. प्राणकः सत्त्वजातीये जीवकद्रुमबोलयोः, मे, वि. प्राणको जीवकतरौ सत्त्वजातीयबोलयोः, हे.

प्राणनाथ. प्राणनाथो यमे ना स्यादिष्टे प्राणाधिपे मतः, मे.

प्राणिद्यूत. प्राणिद्यूतं वदन्ति युद्धेऽपि, ह.

प्राति. प्रातिः पूर्तिप्रदेशयोः स्त्रियाम्, मे. प्रातिः पूर्तिप्रदेशयोः, वि.

प्रादुस्. नामप्राकाश्ययोः प्रादुः, अ. प्रादुः प्राकाश्य दृश्यते । सम्भावेर च प्रवृत्तौ च, मे.

प्राध्व. प्राध्वन्तु प्रणते चातिदूरवर्त्मनि बन्धने, मे. प्राध्वं सुप्रणते चातिदूरवर्त्मनि बन्धने, वि. प्राध्वं दूरपथे प्रह्वे बन्धे, हे. प्राध्वं बन्धनमितुरर्त्तं प्राध्वं प्रह्वे च सूरिभिः, अने. प्रह्वबन्धनयोः प्राध्वं, रु.

प्राध्वम्. प्राध्वं नम्रानुकूलयोः, मे, वि, हे.

प्रान्तर. प्रान्तरं विपिने दूरशून्यवर्त्मनि कोटरे, मे, वि. प्रान्तरं कोटरेऽरण्येऽ दूरशून्यपथेऽपि च, हे.

प्राप्त. प्राप्तं लब्धे समञ्जसे, मे. प्राप्तं वित्ते समञ्जसे, वि. लब्धे समञ्जसे प्राप्तम्, त्रि.

प्राप्तरूप. प्राप्तरूपो ज्ञरम्ययोः, मे. प्राप्तरूपो बुधे रम्ये, वि. प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः, अ. V. सुरूप.

प्राप्ति. प्राप्ति र्महोदये । लाभेऽपि च स्त्रियाम्, मे. प्राप्ति र्लाभे महोदये, वि. प्राप्ति र्महोदये लाभे, हे. उदयेऽधिगमे प्राप्तिः, अ. उदयाधिगमौ प्राप्ती, अने.

प्राय. प्रायः पुमान् अनशने मृत्यौ बाहुल्यतुल्ययोः, मे. प्रायस्त्वानशने मृत्यौ तुल्यबाहुल्ययोरपि, वि. प्रायो वयस्यनशने मृतौ बाहुल्यतुल्ययोः, हे. प्रायो भूम्न्यन्तगमने, अ. प्रायो ना भूमतुल्ययोः, त्रि.

प्रार्थित. प्रार्थितं याचिते शत्रुसंरुद्धेऽभिहते त्रिषु, मे. प्रार्थितं याचिते शत्रुसंरुद्धेऽभिहतेऽपि च, वि. प्रार्थितं हते । याचिते शत्रुसंरुद्धे, हे. अभियुक्तहतौ च प्रार्थितौ समौ, त्रि.

प्रालम्ब. प्रालम्बः स्यात् पयोधरे । त्रपुषे हारभेदे च, हे. V प्रलम्ब.

प्रावृषेण्य. प्रावृषेण्यः पुमान् नीपे प्रावृट्कालभवे त्रिषु, मे.

प्रासाद. प्रासादो देवनृपयो र्गृहे, मे. प्रासादः कथ्यते देवनरदेव निवासयोः, वि. प्रासादो राजमन्दिरे । देवतायतने चापि, हे.

प्रिय. प्रियो हृद्येऽन्यवत् पुंसि ऋद्धिनामौषधौ धवे, मे. प्रियो धवे सौहृद्ये च ऋद्धिनामौषधेऽपि च, वि. प्रियौ ऋद्व्यौषधे हृद्ये धवे, हे.

प्रियंवद. प्रियंवदः खेचरे ना प्रियवाचि तु वाच्यवत्, मे. प्रियंवदः खेचरे स्यात् प्रियवाचि तु वाच्यवत्, वि. प्रियंवदः प्रियवादिनभश्चरविशेषयोः, हे.

प्रियक. प्रियकः पीतशालके। नीपे चित्रमृगे चालौ प्रियङ्गौ कुङ्कुमेऽपि च, मे. प्रियकस्तु चञ्चरीके नीपे काश्मीरजन्मनि। प्रियङ्गौ चित्रहरिणे पीतशालतरावपि, हे. प्रियकः पीतशाले स्यान्नीपे चित्रमृगेऽलिनि। कुङ्कुमे च प्रियङ्गौ च, वि. प्रियको मृगनीपयोः, त्रि. प्रियको वीजसारश्च प्रियकौ द्वीपिचित्रकौ। प्रियकं प्रियतोयं स्यात् प्रियको मुक्तिको व्रती, अने.

प्रियङ्गु. प्रियङ्गुः स्त्री राजिकाकणयोरपि। फलिन्यां कङ्गुसंज्ञे च, मे. प्रियङ्गुः फलिनीकङ्गुपिप्पलीराजिकासु च, वि. प्रियङ्गु राजसर्षपे। पिप्पल्यां फलिनीकङ्ग्वोः, हे.

प्रीत. प्रीतं हृषितनर्मणोः, मे, वि.

प्रीति. प्रीति र्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्, मे. प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीप्रमोदयोः, वि. प्रीतिः स्मरस्त्रियाम्। प्रेम्णि योगमुदोः, हे.

प्रेक्षा. प्रेक्षा नृतेरीक्षणे बुद्धौ, मे, वि. प्रेक्षा धीरीक्षणं नृत्यम्, हे. प्रेक्षा नृतेरीक्षणं प्रज्ञा, अ.

प्रेङ्खा. प्रेङ्खा पर्यटनेऽप्यश्वगतौ संवेशनान्तरे, मे. प्रेङ्खा पर्यटने नृत्ये दोलायां वाजिनां गतौ, हे. प्रेङ्खा पर्यटने नृत्ये भवेदश्वगतावपि, वि.

प्रेत. प्रेतो भूतान्तरे पुंसि मृते स्याद् वाच्यलिङ्गकः, मे. प्रेतो मृते भूतविशेषे च, हे. प्रेतो भूतान्तरे मृते, वि. प्रेतः प्राण्यन्तरे मृते, अ. प्रेतो मृते प्राणिभेदे, त्रि.

प्रेत्य. प्रेत्यामुत्र भवान्तरे, ह.

प्रेत्वन्. प्रेत्वा ना वासवे वाते, मे. प्रेत्वा मरुति वासवे, वि.

प्रेमन्. प्रेमाऽस्त्री स्नेहहर्षयोः, मे. प्रेम नर्म्मणि च स्नेहे, वि. प्रेम तु स्नेहनर्म्मणोः, हे.

प्रैष. प्रैषः क्लेशे च मर्दने । उन्मादे प्रेषणे, मे. प्रैषः स्यात् प्रेषणे क्लेशे मर्दनोन्मादयोरपि, वि. प्रैषः प्रेषणपीड़ने, हे. प्रैषः प्रेषणमर्दने, अ.

प्रोक्षण. प्रोक्षणं सेचने बधे, मे, त्रि.

प्रोक्षित. प्रोक्षितं निहते सिक्ते, मे, वि. प्रोक्षितं सिक्तहतयोः, हे. सिक्ते तु प्रोक्षितं निहतेऽपि च, त्रि.

प्रोत. प्रोतं नपुंसकं वस्त्रे खचिते वाच्यलिङ्गकम्, मे. प्रोतं गुम्फितवास्सयोः, हे. प्रोतं तु गुम्फिते वस्त्रे, वि.

प्रोथ. प्रोथोऽस्त्री हयघोणायां ना कटप्रामध्वगे त्रिषु, मे. प्रोथोऽध्वगेऽश्वघोणायां कटीस्त्रीगर्भयोरपि, वि. प्रोथोऽश्वघोणाध्वगयोः, हे. कटग्रश्वघोणयोः प्रोथः, त्रि. प्रोथमित्युच्यते प्राज्ञैर्हलशूकरयो र्मुखे, द्व.

प्रोढ़. प्रोढ़ो गजाङ्घ्रिपर्वणोः । वाच्यवन्निपुणे तर्के, मे. प्रोढ़ो निपुणतर्के स्यात् प्रोढ़ो हस्त्यङ्घ्रिपर्वणोः, वि. प्रोढ़ो निपुणतर्के स्याद् गजाङ्घ्रिपर्वणोरपि, हे.

प्लक्ष. प्लक्षो जटीगर्दभाण्डद्वीपभित्कुञ्जराशने, मे. प्लक्षो द्वीपविशेषे स्यात् पर्कटीगर्दभाण्डयोः । पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्त्तितः, वि. प्लक्षो द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पक्षके, हे.

प्लव. प्लवः स्यात् प्लवने भेले भेकेऽवौ श्वपचे कपौ । जलकाके च कुलके प्रवणे पर्कटीद्रुमे । कारण्डवाख्यविहगे शब्दे प्रतिगतौ पुमान् । कैवर्त्तमुस्तके गन्धतृणेऽपि स्यान्नपुंसकम्, मे. प्लवः कारण्डवे भेके कुलके भेलके कपौ । शब्दे प्लुतगतौ म्लेच्छे चण्डालजलकाकयोः । प्लवं गन्धतृणं प्रोक्तं कैवर्त्तीमुस्तकेऽपि च, वि. प्लवः म्लेच्छे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः । क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे प्लवं गन्धतृणे मुस्तकमित्यपि, हे. प्लवो निषादे मर्कट्यां भेके भेले गतौ कपौ, त्रि.

प्लवग(ङ्ग). प्लवगो वानरे भेके सारथौ चोष्णदीधितेः, मे, वि. प्लवगः कपिभेकयोः। अर्कसूते, हे. कपौ च प्लवगः, अ. प्लवङ्गः कपिभेकयोः, अने.

प्लवङ्गम. प्लवङ्गमस्तु मण्डूके तथा शाखामृगेऽपि च, मे. प्लवङ्गमः कपौ भेके, वि, हे. कपिभेकौ प्लवङ्गमौ, अ.

प्लुत. प्लुतं तुरङ्गमगतौ क्लीवं पुंसि त्रिमात्रके, मे. प्लुतं तुरङ्गमगतौ प्लुतमाङ्क्स्त्रिमात्रके, वि. प्लुतमश्वस्य गतौ प्लुतस्त्रिमात्रके, हे. प्लुतः स्वरे च, त्रि. ह्रस्वं दीर्घं प्लुतं ज्ञेयं प्लुतं पित्तव्यथा प्लुतिः, अने.

फ. फो यज्ञसाधने ख्याते झञ्झावातेऽपि पुंस्त्रयम्। फं रुषोक्तौ फूत्कृतौ च तथा निष्फलभाषणे, मे. कफे वाते फकारः स्यात् तथाह्वाने प्रकीर्त्तितः। फूत्कारेऽपि च फः प्रोक्तस्तथा निष्फलभाषणे, ए. जनार्द्दनः शिखी रौद्री वामपार्श्वस्तालयः। फट्कारः प्रोच्यते सद्भिः फकारः फान्तिमः स्मृतः, मा.

फटा. फटा तु फणदम्भयोः, मे. फटा तु कितवे फणे, हे. फटा च फणदम्भयोः, वि.

फणा. गोविषाणे फणा ज्ञेया भुजङ्गमशिरः फणा। फणा जटा फणा कृष्णा फणा मस्यनकुण्डली, अने.

फर्फरीक. फर्फरीकश्चपेटे स्यात् फर्फरीकन्तु मार्द्दवे, मे, वि. फर्फरीकन्तु मार्द्दवे। फर्फरीकश्चपेटायाम्, हे.

फल. फलं जातिफले सस्ये हेत्वुत्थे व्युष्टिलाभयोः। त्रिफलायां च कक्कोले प्रियङ्गौ च फली स्मृता, मे. फलं हेतुसमुत्थे स्यात् फलके व्युष्टिलाभयोः। जातिफलेऽपि कक्कोले सस्यबाणाग्रयोरपि॥ फलिन्यां तु फली प्राङ्क्स्त्रिफलायां फलं क्वचित्, वि. फलं हेतुफले जातीफले फलकशस्त्रयोः। त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः॥ फली फलिन्याम्, हे. सस्ये हेतुकृते फलम्, अ. फलं जातीफले लाभे बाणाग्रे फलकेऽपि च, त्रि.

फलकिन्. फलकी मत्स्यभेदे ना वाच्यवत् फलकान्विते, मे. फलकी स्यादिल्लिसाख्यमत्स्ये फलकपाणिके, वि.

फलिन्. फलिन्यग्निशिखायां स्त्री फलिन्यां फलिते त्रिषु, मे.

फलोदय. फलोदयः पुमान् लाभे त्रिदिवेऽप्यालयेऽपि च, मे. फलोदयः स्यात् त्रिदिवे लाभेऽपि च फलोदयः, त्रि. फलोदयो दुष्टलाभयोः, हे. स्वर्गलाभौ फलोदयौ, त्रि.

फाणि. फाणि गुड़े करम्भे च स्त्रियाम्, मे. फाणि गुड़करम्भयोः, वि, हे, हा.

फाण्ट. अश्रमकृतेऽपि फाण्टम्, हा.

फाल. फालः पुंसि महादेवे कालिन्दीभेदनेऽपि च। क्लीवं सीरोपकरणे त्रिषु कार्पासवाससि, मे. फालं सीरोपकरणे कार्पासादिकवाससि, वि. फालन्तु वस्त्रांशे फाल उत्सुतौ। कुशिके च, हे.

फाल्गुन. फाल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे। तपस्यसंज्ञे मासि तत्पूर्णिमायां तु फाल्गुनी, मे. फाल्गुनस्तु तपस्येऽत्र स्यात् पूर्णिमायां तु फाल्गुनी। फाल्गुनः कथितः पार्थे नदीजे ककुभेऽपि च, वि. फाल्गुनो मासपार्थयोः। नदीजेऽर्जुनवृक्षे च फाल्गुनी पूर्णिमाभिदि, हे. फाल्गुनो मासि पार्थे च, त्रि.

फेनिल. फेनिलोऽरिष्टपादपे। ना सफेने त्रिषु क्लीवं कोलीमदनयोः फले, मे. फेनिलः स्यादरिष्टे च फेनिलं बदरीफले। मदनस्य फले चाथ फेनिलोऽरिष्टपादपे, वि. फेनिलं मदनफले बदरे फेनवत्यपि, हे. फेनिलं बदरेऽरिष्टे, त्रि.

फेरव. फेरवो जम्बुकेऽरक्षपे, मे, वि. फेरवो राक्षसे फेरौ, हे.

ब. (बः पुमान् वरुणे सिन्धौ भगे तोये गते तु वा। गन्धने तन्तुसन्ताने पुंस्येव वपने स्मृतः, मे.) छगलन्तो भूधरश्च भगपृष्ठगतस्तथा। सुरसो वज्रमुष्टिश्च बकारो भादिमो मतः, मा.

बक. बकस्तु बकपुष्पे स्यात् काष्ठे श्रीदे च रक्षसि, मे, वि. बको

रक्षोभिदि श्रीदे शिवसखीबकोटयोः, हे. शिवमल्लयां वकः कङ्के, त्रि.

बकेरुका. बकेरुका बलाकाभिद्वातावर्जितशाखयोः, मे, वि. बकेरुका बलाधिका। वातावर्जितशाखा च, हे.

बणिज्. अथ बणिक् स्त्रियाम्। वणिज्यायां पुमान् वाणिजके च करणान्तरे, मे. बणिक्वाणिज्यजीविनि। वणिक्करणभेदे च वणिज्यायामपीष्यते, वि. वनिग् वानिज्यजीविनि। वानिज्ये करणभेदे च, हे.

बदर. बदरा वृष्टिकार्पासयोरेलापर्ण्यां स्त्रियां पुमान्। कार्पाससत्याश्च बदरी कोली क्लीवन्तु तत्फले, मे. बदरं कोलिकार्पासयोः फले स्याद् बदरी तयोः। एलापर्ण्याञ्च बदरा विष्णुक्रान्तौषधावपि, वि. बदरा स्यादेलापर्ण्यां विष्णुक्रान्तौषधावपि। बदरी कोलिकार्पासयोर्बदरन्तु तयोः फले। बदरस्तु कार्पासास्थि, हे.

बद्धशिख. अथ बद्धशिखा स्त्री स्यादुच्चटायां शिशौ त्रिषु, मे. बद्धशिखोच्चटायां स्याद् बाले बद्धशिखो मतः, वि. बद्धशिखो बाले बद्धशिखोच्चटौषधे, हे.

बन्ध. बन्ध आधौ च बन्धने, मे, हे. बन्धस्त्वाधौ बन्धने, वि.

बन्धक. बन्धकः स्याद् विनिमये पुंश्चल्यां स्याच्च बन्धकी, मे. बन्धकः स्याद् विनिमये पुंश्चली स्याच्च बन्धकी, वि. बन्धकस्तु सतत्यक्कारेऽथ बन्धकी। स्वैरिण्याञ्च करिण्याञ्च, हे. करिण्यामपि बन्धकी, त्रि.

बन्धन. बन्धनं वधबन्धयोः, मे, त्रि.

बन्धु. बन्धुः स्यात् पुंसि बन्धूके मित्रे भ्रातरि बान्धवे, मे. बन्धुर्बन्धूककुसुमे स्याद् बन्धु भ्रातरि बान्धवे, वि. बन्धु भ्रातृबान्धवयोः, हे.

बन्धुर. बन्धुरं मुसुरे पुंसि स्त्रीचाङ्गतैलकल्कयोः। बन्धूके वधिरे हंसे त्रिषु स्याद् रम्यनम्रयोः। बन्धुरा पण्ययोषायां स्त्रियां भूम्नि च सक्तुषु, मे. बन्धूरबन्धुरौ रम्ये नम्रे हंसे तु बन्धुरः। बन्धूके च विडङ्गे च बन्धुरा पण्ययोषिति, वि. बन्धूरो रम्यनम्रयोः। बन्धुरन्तु

जीवविडङ्गयोः । बन्धुरा पण्यस्त्रीषायाम्, हे. बन्धुरं रम्य-

बन्धूकं बन्धुजीवे स्यात् बन्धूकः पीतशालके, मे, वि.
शालके । बन्धुजीवे, हे.

बन्धूरः शोभने नम्रे, मे. V. बन्धुर.

बन्ध्यस्त्रवफलस्त्र्यादौ स्त्रियां स्यादप्रजःस्त्रियाम्, मे. बन्ध्यो-
ध्या त्वप्रजातस्त्रियामपि, वि.

बभ्रुर्वैश्वानरे शूलपाणौ च गरुडध्वजे। विशाले नकुले
त्वभिधेयवत्, मे. बभ्रु विशाले नकुले कृशानौ वश्ने मुनौ
ले च, वि. बभ्रुः पिङ्गाग्निस्फुलिङ्गेषु। विशाले नकुले विष्णौ,
नकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु, अ. बभ्रू नकुलपिङ्गलौ,
स्यान्नकुलेऽपि च, रु.

टी. बर्बटी पण्यस्त्रीयोषायां व्रीहिभेदे च योषिति, मे. बर्बटी व्रीहि-
बर्बटी पण्यस्त्रीयोषिति, वि. बर्बटी व्रीहिभिद् वेश्या, हे. बर्बट्यौ
श्ये, त्रि.

र. बर्बरः पामरे केशे चक्रले नीवृदन्तरे। फञ्जिकायां पुमान्
भिदोः स्त्रियाम्, मे. बर्बरः पामरे केशविन्यासे नीवृदन्तरे।
ञ्जकायां तु बर्बरा शाकपुष्पयोः, वि. बर्बरो नीवृदन्तरे। बर्बरा
यां पामरे केशचक्रले। पुष्पे च बर्बरा शाके, हे.

बर्बरीक. बर्बरीकः केशविन्यासकर्मणि। शाकभेदे महाकाले, हे.

र्ह. बर्हं पिच्छे दले स्त्रियाम्, मे. बर्हं दले केकिपिच्छे, वि.
परिवारे कलापे, हे. दलेऽपि बर्हम्, अ.

बल. बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः। पुमान् हलायुधे
दे वायसेऽपि च। बलयुक्तेऽन्यलिङ्गः स्यात् वाट्यालके तु योषिति,
गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः। बलो हलायुधे दैत्यभेदे बलिनि
वाट्यालके बला दृता, वि. बलं रूपे स्थामनि स्थौल्यसैन्ययोः।

बोले बलस्तु बलिनि काके दैत्ये हलायुधे। बला त्वोषधिभेदे स्यात्, हे. स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः, अ. बलं गन्धरसे रूपे क्लीवं वाट्यालके स्त्रियाम्, त्रि. बलो हली बलं सैन्यं बलं सत्त्वं बलौषधी। रत्नज्योति र्बलो दैत्यो बला लक्ष्मी र्बला मही, अने. बलः काके, रु.

बलज. बलजं गोपुरक्षेत्रे ससस्यसङ्गरयोरपि। बलजा वरयोषायां यूथ्याम्, मे. बलजं गोपुरे क्षेत्रे सस्यसङ्गरयोरपि। बलजा वरयोषायां वसुमत्यामपि स्मृता, वि. बलजं गोपुरे सस्ये क्षेत्रसङ्गरयोरपि। सदाकारे बलजा तु पृथिव्यां वरयोषिति, हे. बलजे क्षेत्रपूर्द्वारे बलजा वल्गुदर्शना, अ.

बलदेव. बलदेवो बले वाते त्रायमाणौषधौ स्त्रियाम्, मे. बलदेवः स्मृतो वाते कालिन्दीभेदनेऽपि च। बलदेवामपि प्राहुः त्रायमाणौषधं बुधाः, वि. बलदेवस्तु कालिन्दीकर्षणे मातरिश्वनि। बलदेवा त्रायमाणा, हे.

बलभद्र. बलभद्रा त्रायमाणाकुमार्य्योः पुंसि सीरिणि, मे. बलभद्रो रौहिणेये त्रायमाणौषधावपि। बलभद्रा कुमार्यां स्यात्, वि. बलभद्रस्त्वनन्ते बलशालिनि। बलभद्रा कुमार्यां स्यात् त्रायमाणौषधावपि, हे.

बलाक. बलाका बकपंक्तौ स्याद् बलाका विसकण्ठिका। बलाका कामुकी प्रोक्ता बलाकश्च बको मतः, वि.

बलाहक. बलाहको गिरौ मेघे दैत्यनागविशेषयोः, मे, वि. बलाहकोऽम्बुदे गिरौ। दैत्ये नागे, हे. गिरिमेघौ बलाहकौ, त्रि.

बलि. बलि र्दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि। गृहदारुप्रभेदे च जठरावयवेऽपि च, मे. बलिश्चामरदण्डे च जरया श्लथचर्मणि। उदरावयवे दैत्ये करपूजोपहारयोः। गृहदारुविशेषे च गन्धकेऽपि क्वचिन् मतः, वि. बलि र्दैत्योपहारयोः। करे चामरदण्डे च गृहदारूदरांशयोः। त्वक्सङ्कोचे गन्धके च, हे. बलिश्चामरदण्डेऽपि, हा. करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्, अ. बलिर्जराश्लथत्वे च गृहदार्वसुरौ बली, त्रि. बलिः स्त्री मध्यभागोर्म्मि र्बलिश्चर्म

जराकृति। बलिः पूजोपहारः स्याद् बलि दानवसत्तमः, अने. बलिः करे, ह.

बल्य. बल्यं प्रधाने धातौ स्यात् क्लीवं बलकरे त्रिषु, मे. बल्यं प्रधाने धातौ स्यात् क्लीवं बलकरेऽपि च, वि. बल्यं रेतोबलकृतोः, हे.

बक्ष. बक्ष सत्रात् त्रयादिसंख्यासु विपुलेऽप्यभिधेयवत्, मे. बक्ष सत्राद् विपुले त्रयादिसंख्यासु त्वभिधेयवत्, वि. बक्ष भूयसि। त्रयादिकासु च संख्यासु, हे. बक्ष विपुलसंख्ययोः, त्रि.

बक्षक. बक्षकः कर्कटेऽर्के च दात्यूहे जलखादके, वि. बक्षको जलखादके। दात्यूहे कर्कटेऽर्के च, हे. v. बाक्षक.

बक्षफल. भवेद् बक्षफलो नीपे नाऽमलक्यान्तु योषिति, मे. भवेद् बक्षफलाभिख्या मलपूनीपदृक्षयोः, वि. बक्षफलः पुनः। नीपे बक्षफलो फल्गौ, हे.

बक्षरूप. बक्षरूपः शिवे विष्णौ धूनके सरटे स्मरे, मे, वि. बक्षरूपः स्मरे विष्णौ सरटे धूनके शिवे, हे.

बक्षल. बक्षला नीलिकायां सत्रादेलायां गवि योषिति। कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम्। पुंस्यग्नौ कृष्णपक्षे च वाच्यवत् प्राज्यकृष्णयोः, मे. बक्षलः कृष्णपक्षेऽग्नौ शितौ च बक्षला गवि। एलायां नीलिकायाञ्च बक्षलाः कृत्तिकासु च। बक्षलं प्राज्यनभसोः, वि. बक्षलं भूरिवियतो बक्षलः पावके शितौ। कृष्णपक्षे बक्षला तु सुरभ्यां नीलिकैलयोः। बक्षलास्तु कृत्तिकासु, हे. बक्षलाः कृत्तिका गावो बक्षलोऽग्नौ शितौ त्रिषु, अ. बक्षलः कृष्णपक्षेऽपि, त्रि. बक्षलाः कृत्तिका ज्ञेया गावश्च बक्षला मताः, अने.

बा. उपमायां विकल्पे बा, अ. v. वा.

बाणिजक. अथ बाणिजकः वाड़वाग्नौ बणिजयपि, मे. बाणिजको वड़वाग्नौ बणिजयपि, वि.

बाध. बाधा दुःखे निषेधे च, मे. बाधा दुःखनिषेधयोः, वि, हे, ह. निषेधदुःखयो र्बाधः, त्रि.

बान्धव. बान्धवो बन्धुसुहृदोः, मे, वि. बान्धवो बन्धुमित्रयोः, हे.

बार्दल. बार्दलं दुर्दिने मेलानन्दायां बार्दलः स्मृतः मे. बार्दलं दुर्दिने मेलानन्दायामपि वार्दलः, वि. बार्दलं दुर्दिने मसत्राम्, हे. मेलानन्देऽपि बार्दलम्, हा.

बार्वटीर. बार्वटीरो रङ्ग आम्रास्थ्यङ्कुरे गणिकासुते, मे. बार्वटीरस्त्रपावाम्रास्थ्यङ्कुरे गणिकासुते, वि. बार्वटीरस्त्रपुन्याम्रास्थ्यङ्कुरे गणिकासुते, हे.

बाल. बालो ना कुन्तलेऽश्वस्य करिणश्चापि बालधौ। नालिकेरे हरिद्रायां मल्लिकाभिद्यपि स्त्रियाम्। वाच्यलिङ्गोऽर्भके मूर्खे क्लीवेरे पुंनपुंसकम्। अलङ्कारान्तरे मेध्ये बालो बाला त्रुटिस्त्रियोः, मे. बालः कचे शिशौ मूर्खे क्लीवेरेऽश्वेभपुच्छयोः। अलङ्कारान्तरे मेध्ये बालो बाला त्रुटिस्त्रियोः, वि. बालोऽस्त्रेऽश्वेभपुच्छयोः। शिशौ क्लीवेरकचयो र्बाला तु त्रुटियोषितोः। बालो भूषान्तरे मेध्ये, हे. मूर्खेऽर्भकेऽपि बालः स्यात्, अ. बालो क्लीवेरकेशयोः, त्रि. बालः केशो जलं बालं बालं काशतृणं स्मृतम्। बालो मूर्खः शिशु र्बालो बालो वेग उदाहृतः, अने.

बालक. बालकस्तु शिशावश्वे बालधौ हयहस्तिनोः। अङ्गुलीयकक्लीवेरवलये पुंसि बालिका। बालायां बालुकापत्रकाहलाकर्णभूषणे, मे. बालकोऽश्वे शिशौ केशे वाजिवारणबालधौ। अङ्गुलीयकक्लीवेरपारिहार्येषु बालकम्। वालिका वालुकावालापिञ्जोलाकर्णभूषणे, वि. बालिका कर्णभूषणे। पिञ्जोलायां वालुकायां बालायां बालकः पुनः। शिशौ मूर्खेऽश्वगजयो र्बालधौ, हे. पिञ्जोला सिकता कर्णभूषा कन्या च वालिका, त्रि. बालकः खेचरो व्याघ्रो बालकः पृथुकः स्मृतः। वालकं गन्धद्रव्यञ्च जटाजूटश्च बालकम्, अने.

बालिश. बालिशस्तु शिशौ मूर्खे, मे. बालिशः शावके मूर्खे, वि. बालिशस्तु शिशौ मूर्खे, हे. शिशावश्वे च बालिशः, अ. बालेऽपि बालिशः स्यात्, ह.

बालेय. बालयो गर्द्दभे पुंसि मृदौ बलिहिते त्रिषु, मे. बालेयस्तु गर्द्दभे। बल्यर्थे कोमलाङ्गारवल्लर्याम्, हे. बालेयोऽङ्गारवल्लर्यां खरे बलिहिते त्रिषु, वि. बालेयौ मृदुगर्द्दभौ, त्रि.

बाह्लक. बाह्लकः कर्कटे चार्के दात्यूहे जलखातके, मे. v. बह्लक.

बाह्लज. बाह्लजः चत्रिये कीरे स्वयंजाततिलेऽपि च, मे, वि. बाह्लजस्तु स्वयंजाततिले चत्रियकीरयोः, हे.

बीभत्स. बीभत्सो नाऽर्ज्जुने क्रूरघृणात्मविकृतौ त्रिषु, मे. बीभत्सो विकृते क्रूरेऽप्यर्ज्जुने च घृणात्मनि, वि. बीभत्सो विकृते क्रूरे रसे पार्थे घृणात्मनि, हे. बीभत्सो हिंस्रोऽपि, अ. रसे क्रूरे च विकृतौ बीभत्सस्त्रिषु नाऽर्ज्जुने, त्रि.

बुक्कस. बुक्कसी नीलिकाकाल्यो र्बुक्कसः श्वपचेऽधमे, हे. v. पुक्कस.

बुद्ध. बुद्धो जिने लब्धवर्णे पुंसि स्याद् बुधितेऽन्यवत्, मे. बुद्धो जिने च धीरे च सौम्ये च बुधितेऽपि च, वि. बुद्धः पण्डिते बुधिते जिने, हे. बुद्धो ज्ञाते जिने बुधे, त्रि.

बुध. बुधः सौम्ये च पण्डिते, मे. बुधः सौम्ये कवौ, हे. बुधः कवौ रौहिणेये, वि. बुधवृद्धौ पण्डितेऽपि, अ. रौहिणेयकवौ बुधः, त्रि.

बुधान. बुधानस्तु गुरौ विज्ञे, मे. बुधानः पण्डिते गुरौ, वि.

बुध्न. बुध्नो ना मूलरुद्रयोः, मे. बुध्नः शिफायां रुद्रे च, वि. बुध्नस्तुण्डिगिरीशयोः, ह. v. ब्रध्न.

बृ(वृ)हती. बृहती वसनान्तरे। छन्दोभित्क्षुद्रवार्त्ताकीवारिधानीषु वाचि च। कण्टकारीमहत्योश्च, मे. बृहती क्षुद्रवार्त्ताक्यां कण्टकार्यां च वाचि च। वारिधान्यां महत्याञ्च छन्दोवसनभेदयोः, वि. वृहती क्षुद्रवार्त्ताक्यां छन्दोवसनभेदयोः। महत्यां वाचि वाधान्याम्, हे. वृहती क्षुद्रवार्त्ताकीच्छन्दोभेदे महत्यपि, अ.

बोधन. बोधनं गन्धदीपने। बोधनी बोधिपिप्पल्योः, मे. बोधनी बोधिपिप्पल्यो र्बोधनं गन्धदीपने, वि.

बोधि. बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे, मे. बोधिः समाधिभेदे स्यात् बोधिः पिप्पलपादपे, वि. बोधि र्बौद्धसमाधौ चार्हद्धर्माप्तौ च पिप्पले, हे.

ब्रध्न. ब्रध्नो गिरिद्रुममूलयोः, हे. V. बुध्न.

ब्रह्मन्. ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदो विप्रे, मे. ब्रह्मा विरिञ्चिद्विजयो ऋत्विक्चन्द्रार्कयोगयोः। ब्रह्म प्रोक्तं तपोऽध्यात्मवेदज्ञानेषु सूरिभिः, वि. ब्रह्म तु तपसि ज्ञाने वेदेऽध्यात्मे द्विजे विधौ। ऋत्विग्योगभिदोश्च, हे. वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः, अ. वेदाधयात्मब्राह्मणहिरण्यगर्भेषु कथ्यते ब्रह्म, ह.

ब्रह्मण्य. ब्रह्मण्यो ब्रह्मसाधौ स्यात् ब्रह्मदारुशनैश्चरे, मे. ब्रह्मण्यो ब्रह्मणो हिते। शनैश्चरे, हे. ब्रह्मण्यो ब्रह्मसाधौ स्यात् ब्रह्मण्यश्च शनैश्चरे, वि.

ब्रह्मपुत्र. ब्रह्मपुत्रः क्षेत्रभेदे नदभेदे च पुंस्ययम्, मे.

ब्रह्मबन्धु. ब्रह्मबन्धुरधिक्षिप्ते निर्देशे ब्राह्मणस्य ना, मे. ब्रह्मबन्धुरधिक्षेपे निर्देशे च द्विजन्मनाम्, वि. ब्रह्मबन्धु र्निन्द्यविप्रे बान्धवे ब्राह्मणस्य च, हे. ब्रह्मबन्धुरधिक्षेपे निर्देशे, अ.

ब्राह्मण. ब्राह्मणं ब्रह्मसङ्घाते वेदभागे नपुंसकम्। भूमिदेवे तु पुंलिङ्गः फञ्जिकापृक्कयोः स्त्रियाम्, मे. ब्राह्मणी फञ्जिकास्पृक्काद्विजपत्नीषु विश्रुता। विप्रे तु ब्राह्मणो वेदे ब्राह्मणं विप्रसंहतौ, वि. ब्राह्मणं विप्रसंहतौ। वेदे च ब्राह्मणो विप्रे, हे. मन्त्राख्यवेदे विप्रौघे क्लीबं ना ब्राह्मणो द्विजे, त्रि.

ब्राह्मण्य. ब्राह्मण्यं ब्राह्मणत्वे च समूहे च द्विजन्मनाम्, मे. ब्राह्मण्यं ब्राह्मणत्वे स्यात् समूहे च द्विजन्मनाम्, वि. ब्राह्मण्यं ब्रह्मसङ्घेऽपि, त्रि.

ब्राह्मी. ब्राह्मी तु फञ्जिकायां स्याच्छाकमत्स्यप्रभेदयोः। ब्राह्मी

तु भारतीसोमवल्लरीब्रह्मशक्तिषु, मे. ब्राह्मी तु भारतीसोमवल्लरीब्रह्मशक्तिषु। फञ्जिकापङ्कगण्डिकाशाकभेदेषु च स्मृता, वि. ब्राह्मी तु भारती। शाक-भेदः पङ्कगण्डी हञ्जिका सोमवल्लरी। ब्रह्मशक्तिः, हे.

भ. भं नक्षत्रे गभस्तौ स्त्री पुंसि स्याद् भ्रगुनन्दने, मे. भा स्यान् मयूखे शुक्रे भं नक्षत्रं च प्रकीर्त्तितम्, वि. भः शुक्रे भमुडौ भांऽशौ, हे. भस्त्वे भ्रगुजे पुमान्, त्रि. नक्षत्रे भं बुधाः प्राहु र्भवने भः प्रकीर्त्तितः। दीप्ति र्भा स्यात्, ए. विश्वमूर्त्ति र्द्विरण्डेशो निद्रा नाभिगतोऽपि च। भ्रुकुटी च भरद्वाजो भकारश्च जयापहः, मा.

भक्त. भक्तमन्ने तत्परे च, हे.

भक्ति. भक्ति र्विभागे सेवायां स्त्रियाम्, मे, वि. भक्तिः सेवागौण-हत्त्योर्भङ्ग्यां श्रद्धाविभागयोः, हे. सेवाविभागयो र्भक्तिः, त्रि.

भग. भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्त्तिषु। माहात्म्यैश्वर्य-यत्नेषु धर्मे मोक्षे च ना रवौ, मे. भगोऽर्कज्ञानमाहात्म्ययशोवैराग्यमुक्तिषु। रूपवीर्यप्रयत्नेच्छाश्रीधर्मैश्वर्ययोनिषु, हे. भगमैश्वर्यमाहात्म्यज्ञानवैराग्ययो-निषु। यशोवीर्यप्रयत्नेच्छाश्रीधर्मरविमुक्तिषु, वि. भगं श्रीकाममाहात्म्यवीर्य-यत्नार्ककीर्तिषु, अ. भगं वैराग्ययोनीच्छाज्ञानैश्वर्येषु, त्रि. श्रियां यशसि सौभाग्ये योनौ कान्तौ मह्म्नि च। सूर्ये संज्ञाविशेषे च शशाङ्के च भगश्रुतिः, अने.

भगवत्. भगवान् ना जिने गौर्यां स्त्रियां पूज्ये तु वाच्यवत्, मे. भगवान् बुद्धपूज्ययोः, वि. जिने पूज्ये च भगवान्, त्रि.

भङ्ग. भङ्गो जयविपर्यये। भेदरोगतरङ्गेषु भङ्गा शस्यान्तरे स्त्रियाम्, मे. भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये। कौटिल्ये भयविच्छित्त्यो-र्भङ्गा शणे, हे. भङ्गस्तरङ्गे रुग्भेदे भेदे जयविपर्यये। भङ्गा शणाख्यसस्येऽपि, वि. तरङ्गभेदयो र्भङ्गः भङ्गा शस्ये शणाह्वये, त्रि. भङ्गः पलायनं वीचि र्भङ्गः शस्यश्च भञ्जनम्, अने.

भङ्गि. भङ्गिः पुन र्भक्तिवीचयोः, हे.

भङ्गुर. भङ्गुरौ वक्रनश्वरौ, हे.

भट. भटः स्यात् पुंसि वीरे च विशेषे पामरस्य च, मे. भटो वीरे
ेच्छभेदेऽपि च, हे. भटः पामरभेदे च वीरे च, वि.

भटि. प्रणमे भटिः, वि.

भट्टारक. भट्टारको नृपे नाट्यवाचा देवे तपोधने, मे. भट्टारकः
रे राज्ञि कथितश्च तपोधने, वि. भट्टारको राज्ञि मुनौ सुरे, हे. राज्ञि
ट्टारकः सुरे, त्रि.

भट्टिनी. भट्टिनी द्विजभार्यायां नाट्योक्तां राजयोषिति, मे, वि.
ट्टिनी तु ब्राह्मण्यां नृपयोषिति, हे.

भण्डन. भण्डनं कवचे युद्धे खलीकारेऽपि न द्वयोः, मे. भण्डनं
वचे युद्धे खलीकारे च वर्त्तते, वि. भण्डनं कवचे युधि। खलीकारे, हे.

भद्र. भद्रः शिवे खञ्जरीटे वृषे मेरुकदम्बके। करिजातिविशेषे
ा क्लीवं मङ्गलमुस्तयोः। काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च।
तविभेदे प्रसारिण्यां कट्फलानन्तयोरपि॥ त्रिषु श्रेष्ठे च साधौ च न पुंसि
रणान्तरे, मे. भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे। भद्रो रुद्रे वृषे
ामचरे मेरुकदम्बके॥ हस्तिजात्यन्तरे भद्रो वाच्यवत् श्रेष्ठसाधुनोः।
द्रा मन्दाकिनीरास्नाकृष्णाऽनन्तासु कट्फले, वि. भद्रन्तु मङ्गले। मुस्तक-
ेष्ठयोः साधौ काञ्चने करणान्तरे। भद्रो रामचरे हस्तिजातौ मेरुकदम्बके।
वि शम्भौ भद्रा विष्टौ नभःसरिति कट्फले। कृष्णानन्तारास्नासु च, हे.

भद्रकाली. भद्रकाली तु गन्धोल्यां कात्यायन्यामपि स्त्रियाम्, मे.
द्रकाली तु गन्धोल्यामुमायामोषधीभिदि, वि. भद्रकाल्यौषधीभिदि।
न्धोल्यां हरपत्न्यां च, हे.

भन्द. भन्दं कल्याणशर्मणोः, मे, वि. भन्दं कल्याणे सौख्ये च, हे.

भय. भयं प्रतिभये घोरे प्रसूने कुब्जकस्य च, मे, वि. भयं भीतौ
नयङ्करे। कुब्जकपुष्पे, हे. भयं भीकुब्जपुष्पयोः, त्रि.

भयानक. भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे, मे. भयानकः

स्मृतो व्याघ्रे सैंहिकेयेऽपि भीषणे, वि. भयानकस्तु भीषणे। व्याघ्रे राहौ रसे, हे.

भर. भरोऽतिशयभारयोः, मे, वि, हे, त्रि.

भरण. भरणी घोषके ऋक्षे भरणं वेतने भृतौ, मे. भरणी घोषके ऋक्षे भरणं वेतने भृतौ, वि.

भरत. भरतो नाट्यशास्त्रमुनौ नटे। रामानुजे च दौष्मन्तौ, मे. भरतो वाद्यभेदेऽपि दौष्मन्तौ शबरे नटे। रामानुजे च भरतस्तन्तुवायेऽपि च क्वचित्, वि. भरतः शबरे नटे। क्षेत्रे रामानुजे शास्त्रे दौष्मन्ताऋषभात्मजे। तन्तुवाये, हे. रामानुजे नाट्यशास्त्रे दौष्मन्तौ भरतो नटे, त्रि.

भरद्वाज. भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहङ्गमे, मे, वि. भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्ये च पक्षिणि, त्रि. भरद्वाजः पक्षिभेदे बृहस्पतिसुतेऽपि च, हे.

भरु. भरुः स्वर्णे हरे पुंसि, मे. भरु भर्त्तरि काञ्चने, वि. भरु भर्तृकनकयोः, हे.

भर्तृ. भर्त्ता स्वामिनि पुंसि स्यात् त्रिषु धातरि पोष्टरि, मे. भर्त्ता पोष्टरि धारके, हे. भर्ता स्वामिनि धारके, वि. भर्त्ता धातरि पोष्टरि, अ.

भर्म्मन्. भर्म्म स्यात् काञ्चने भृतौ, मे. भर्म्म स्वर्णे भृतौ भानौ, वि. भर्म्म भारे भृतौ हेम्नि, हे. भृतिकाञ्चनयो भर्म्म, त्रि.

भल्ल. भल्लः स्यात् पुंसि भल्लूके शस्त्रभेदेऽपि न द्वयोः। भल्लातक्यां स्त्रियां भल्ली, मे. भल्लो भल्ली च बाणे स्याद् भल्लो भल्लूक ष्यते। भल्लातक्यां तु भल्ली स्यात्, वि. भल्लो भल्लूकबाणयोः। भल्ली भल्लातकः, हे.

भव. भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः, मे. भवः संसारसंप्राप्तिश्रेयःशङ्करजन्मसु, वि. भवः सत्ताप्तिजन्मसु। रुद्रे श्रेयसि संसारे, हे. जन्महरौ भवौ, अ. सत्तासंसारयो भवः, हा. भवः संसारे, ह.

भवत्. भवद् युष्मत्सतोस्त्रिषु। स्त्री वाणभेदे, मे. भवती वाणभेदे शादन्यवत् त्वत्सदर्थयोः, वि. भवान् युष्मद् सदर्थयोः, त्रि.

भवन. भवनं स्याद्गृहे भावे, मे. भवनं भाववेश्मनोः, वि. भवनं सदने भावे, हे. जन्माश्रयश्च भवनम्, त्रि.

भव्य. भव्यं शुभे च सत्ये च योग्ये भाविनि तु त्रिषु। कर्मरङ्ग-तरौ पुंसि स्त्रियां करिकणोमयोः॥ क्लीवमस्थनि, मे. भव्यं सत्ये शुभे चाथ भेद्यवद् योग्यभाविनोः। कर्मरङ्गतरौ भव्यो भव्या करिकणोमयोः, वि. भव्यन्तु फले योग्ये शुभेऽस्थनि। सत्ये भाविनि भव्यस्तु कर्मरङ्गतरौ स्तुति। भव्योमाकरिपिप्पल्योः, हे.

भषक. भषको दुर्जनः प्रोक्तो भषकः सरमासुतः, अने.

भसद्. भसत् स्त्री भास्वरे योनौ, मे. भसद् भास्वरमासयोः, हे. भसत् प्रभास्वरे मासे, वि.

भस्मक. भस्मकं रोगभेदे स्याद् विडङ्गकलधौतयोः, मे, वि.

भस्मतूल. भस्मतूलं ग्रामकूटे पांशुवर्षे हिमेऽपि च, मे, वि. भस्मतूलं पुन र्हिमे। ग्रामकूटे पांशुवर्षे, हे.

भाकूट. भाकूटः शैलभषयो र्भेदे स्यात्, मे. भाकूटः शैलमीनयोः, हे. भात् कूटः कथ्यते मीनभेदे शैलान्तरेऽपि च, वि.

भाग. भागो रूपार्धके भाग्यैकदेशयोः, मे, हे. भागो रूपार्धके प्रोक्तो भागधेयैकदेशयोः, वि. एकदेशांशयो र्भागः, त्रि.

भागधेय. भागधेयं मतं भाग्ये भागप्रत्याययोः पुमान्, मे. भागधेयं स्मृतं भाग्ये भागप्रत्याययोरपि, वि. भागधेयः पुनः करे। दायादे भाग-धेयं तु भाग्ये, हे.

भाग्य. भाग्यन्तु स्यात् शुभाशुभकर्मणोः, मे. भाग्यं शुभात्मक-विधौ स्यात् शुभाशुभकर्मणि, वि. भाग्यं कर्म शुभाशुभम्, हे, अ.

भाजन. भाजनं योग्यपात्रयोः, मे, वि. भाजनं पात्रयोग्ययोः, त्रि.

भाण्ड. भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः, मे. भाण्डं भूषणमात्रेऽपि भाण्डं मूलवणिग्धने। नदीपात्रे तुरङ्गानां भूषणे भाजने-ऽपि च, वि. भाण्डं मूलवणिग्वित्ते तुरङ्गाणां च मण्डने। नदीकूलद्वयो-

मध्ये भूषणे भाजनेऽपि च, हे. स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने, अ. भाण्डं भूषणमात्रेऽपि, हा.

भानु. भानु र्ना किरणे सूर्ये, मे. भानुः किरणसूर्ययोः, वि. भानुरंशौ रवौ दिने, हे. भानू रश्मिदिवाकरौ, अ. भानु र्घृणिरहस्करः, अने.

भाम. भामः क्रोधे रवौ दीप्तौ, मे. भामः क्रोधे रुचौ रवौ, हे.

भार. भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके, मे. भारस्तु वीवधे स्वर्णपलानामयुतद्वये, वि. भारो द्रव्यशतीद्वये। पलानां वीवधे चापि, हे.

भारत. भारतं ग्रन्थभेदे स्याद् वर्षभेदेऽथ भारती। वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयोः, मे. भारतं ग्रन्थभेदे स्याज्जम्बुद्वीपेऽपि भारतम्। भारती तु सरस्वत्यां पक्षिणीवृत्तिभेदयोः, वि. भारतन्तु शास्त्रे द्वीपांशभिद्यपि। भारती पक्षिणीवृत्तिभिदो वाचि, हे. पक्षिण्यां वाचि वृत्तौ च भारती भारतं पुनः। जम्बुद्वीपे व्यासकृतौ, त्रि.

भारद्वाज. भारद्वाजी वनकार्पास्यां ना द्रोणर्षिभेदयोः, मे. भारद्वाजः स्मृतो मुनौ। द्रोणे च वनकार्पास्यां भारद्वाजी च कथ्यते, वि. भारद्वाजो मुनौ चापि पिचुमन्दद्रुमेऽपि च, हे. बुधैः ख्यातो भारद्वाजो द्रोणाचार्ये मुनावपि, त्रि.

भार्गव. भार्गवो गजधन्विनोः। शुक्रे परशुरामे च भार्गवी पार्वतीश्रियोः। दूर्वायाम्, मे. भार्गवः परशुरामे स्याद् गजे शुक्रे सुधन्वनि। भार्गवी हैमवत्यां च कमलाऽसितदूर्वयोः, वि. भार्गवः परशुरामे सुधन्वनि मतङ्गजे। दैत्यगुरौ भार्गवी तु कृष्णदूर्वोमयोः स्त्रियाम्, हे. गजे धन्विनि शुक्रे च परशुरामे च भार्गवः। दूर्वा गौरी च भार्गव्यौ, त्रि.

भार्य्याटिक. भार्य्याटिकः पुमान् भार्य्यानिर्जिते हरिणान्तरे, मे. भार्य्याटिको भवेद् भार्य्यानिर्जिते हरिणान्तरे, वि. भार्य्याटिको मुनिभेदे भार्य्यया च विनिर्जिते, हे.

भार्य्यारु. भार्य्यारुः शैलभेदे स्यान् मृगभेदे च तत्र च। क्रीड़या

परभार्यायां पुत्रो येनोपपादितः, मे, वि. भार्याकरन्दस्त्रीपुत्रोत्पादके खग-ग्रैलयोः, हे.

भाल. भालं तेजोललाटयोः, मे. भालं ललाटमहसोः, वि. भालं स्याल्ललाटे महस्यपि, हे.

भालाङ्क. भालाङ्कः करपत्रे स्यात् शाकभेदे च रोहिते। महालक्षण-सम्पन्नपुरुषे कच्छपे हरे, मे, वि. भालाङ्कः कच्छपे हरे। महालक्षणसम्पूर्ण-पुरुषे करपत्रके। रोहिते शाकभेदे च, हे. भालाङ्को रोहिते दृष्टः करपत्रे च कच्छपे, हा.

भाव. भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु। क्रियालीलापदा-र्थेषु विभूतिबुधजन्तुषु॥ रत्यादौ, मे. भावः स्वभावेऽभिप्राये चेष्टासत्तात्म-योनिषु। क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु, त्रि. भावोऽभिप्रायवस्तुनोः। स्वभावजन्मसत्तात्मक्रियालीलाविभूतिषु। चेष्टायोन्यो र्बुधे जन्तौ शृङ्गा-रादेश्च कारणे। शब्दप्रवृत्तिहेतौ च, हे. भावः सत्तास्वभावाभिप्राय-चेष्टात्मजन्मसु, अ. भावो गौरविते जन्तौ पदार्थेऽभिनयान्तरे, त्रि. आत्मा भावो मनो भावो भावः सत्ता भवोऽपि च। भावः पूजग्रात्मको लोकः पदार्थो भाव उच्यते, अने. चेष्टात्मजन्मसत्ताभिप्रायेष्वभिहितो भावः, ह.

भावना. भावना तु ननना ध्याने पर्यालोचेऽधिवासने, मे. भावना लेपने ध्याने, वि. भावना वासना ध्यानम्, हे.

भावाट. भावाटो भावुके साधुनिवेशे कामुके नटे, मे. भावाटो भावुके साधुनिवेशे कामुकेऽपि च, हे, वि.

भावित. भावितं वासिते प्राप्ते, मे, वि, हे.

भाषा. v. वाच्.

भास्. भाः प्रभावे मयूखे स्त्री, मे. भाः प्रभावे मयूखे च, वि, हे.

भास. भासः पुंसि प्रभायां स्याद् विशेषे विहगस्य च, मे. भासस्तु भासि गृध्रशकुन्तयोः, हे. ? भासः सुवर्णचूड़े स्यात् प्रभेदे किष्कु-पर्वणः, वि.

भासन्त. भासन्तः सुन्दराकारे त्रिषु ना भासपक्षिणि; मे. भासन्तो भे सूर्ये रम्यभासयोः, हे.

भास्कर. भास्करोऽग्नौ प्रभाकरे, मे. भास्करस्तपने वह्नौ प्रभाकरसमः स्मृतः, वि. भास्करो वह्निसूर्ययोः, हे.

भास्वत्. भास्वान् भास्करसूर्यत्रयोः, मे, वि. भास्वान् दीप्ते रवौ, हे. भास्वन्तौ सूर्यभास्वरौ, त्रि.

भिक्षा. भिक्षा भृतौ याच्ञासेवाभिक्षितवस्तुषु, मे. भिक्षा भृतौ च याच्ञायां सेवाभिक्षितवस्तुनोः, वि. भिक्षासेवाप्रार्थनयो भृतौ भिक्षितवस्तुनि, हे. भिक्षा सेवाऽर्थना भृतिः, श्र.

भित्ति. भित्तिः कुड्यप्रदेशयोः, मे. भित्तिः कुड्ये प्रभेदे च संविभागावकाशयोः, वि. भित्तिः कुड्ये प्रदेशे च, हे. कुड्यभेदनयो र्भित्तिः, त्रि.

भिन्न. भिन्नः स्यात् त्रिषु दारिते। सङ्गतेऽन्यत्र फुल्ले च, मे. भिन्नमन्यार्थवचने सङ्गते दारिते स्फुटे, वि. भिन्नोऽन्यः सङ्गतः फुल्लो दीर्णः, हे. भिन्नं दीर्णे विशेषिते, त्रि.

भीत. भीतं भयेऽथ भीयुते त्रिषु, मे. भीतं भये भययुते वाचत्रवत् परिकीर्त्तितम्, वि.

भीति. भीति र्भये स्त्रियाम्, मे. भीतिः साध्वसकम्पयोः. वि.

भीम. भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे, मे. भीमोऽम्लवेतसे शम्भौ घोरे चापि वृकोदरे, वि. भीमो वृकोदरे घोरे शङ्करेऽप्यम्लवेतसे, हे. भीमः शम्भौ च पाण्डवे, त्रि.

भीरु. भीरुस्तु त्रिलिङ्गः स्याद् वरयोषिति योषिति, मे. भीरुर्योषिति कातरे, हे.

भीषण. भीषणो रसे सल्लकद्रां ना गाढ़े दारुणे त्रिषु, मे. भीषणो दारुणे रुद्रे भीषणं सल्लकीरसे, वि. भीषणं शल्लकीरसे। भीषणो दारुणे गाढ़े, हे.

भीष्म. भीष्मो गाङ्गेयभीमयोः, मे. भीष्मस्तु भीषणे रुद्रे गाङ्गेये

च निशाचरे, वि. भीष्मो रुद्रे च गाङ्गेये रावणे च भयङ्करे, हे. गाङ्गेय-भीषणौ भीष्मौ, त्रि.

भुज (जा). भुजा। द्वयो र्बाहौ करे, मे. भुजो बाहौ करे, हे. भुजः पाणौ च बाहौ च, वि.

भुजङ्ग. भुजङ्गोऽहौ च षिङ्गे च, मे. भुजङ्गः षिङ्गसर्पयोः, वि. भुजङ्गः सर्पषिङ्गयोः, हे. भुजङ्गो भुजगे षिङ्गे, त्रि.

भुजिष्य. भुजिष्यस्तु स्वतन्त्रे स्याद् हस्तसूत्रकदासयोः। स्त्रियां दासीगणिकयोः, मे. भुजिष्यः स्यात् सहाये हस्तसूत्रके। स्वतन्त्रे च भुजिष्या तु दासीगणिकयो र्मता, वि. भुजिष्यः स्यादनधीने किङ्करे हस्तसूत्रके। भुजिष्या गणिकादास्योः, हे. अनधीने सहाये च भुजिष्यो हस्तसूत्रयोः, त्रि.

भुण्ड. भुण्डाविर्वारुकुष्माण्डौ, हा.

भुवन. भुवनं पिष्टपेऽपि स्यात् सलिले गगने जले, मे. भुवनं विष्टपे मर्त्यां सलिलेऽपि वियत्यपि, वि. भुवनं पिष्टपे तोये, त्रि. भुवनं लोकतोययोः, अने. भुवनं लोकखाम्बुषु, हे.

भुवन्यु. भुवन्युस्तु पुमान् भानौ ज्वलने शशलाञ्छने, मे. भुवन्यु-र्ज्वलने भानौ भुवन्युः शशलाञ्छने, वि.

भू. भूः स्थानमात्रे कथिता धरण्यामपि योषिति, मे. भूस्तु भूमि-रिव क्षितौ। स्थाने च, हे. भूः पृथिव्यां स्थानमात्रे, वि. भू र्भूमौ स्थानमात्रे च, त्रि.

भूक. भूकं छिद्रे च काले च, मे. भूकः काले छिद्रे, हे. भूक-श्छिद्रे च काले च, वि.

भूकुटिन्. भूकुटी सूकरः ख्यातो भूकुटी च कृषीवलः, अने.

भूकेश. भूकेशः शैवले वटे। भूकेशी वल्वजेऽपि स्यात्, मे. भूकेशी वल्वजेषु स्यात् भूकेशः शैवले वटे, वि. भूकेशः शैवले वटे, हे.

भूजम्बू. भूजम्बूरपि गोधूमे विकङ्कतफलेऽपि च, मे, वि. भूज-म्बूस्तु विकङ्कते। गोधूमाह्वयधान्ये च, हे.

